कविहृदयम् -

# वयं पञ्चोत्तरं शतम्

**परस्परविरोधे च वयं पञ्च शतं तु ते।**
**परैः परिभवे प्राप्ते वयं पञ्चोत्तरं शतम्॥**

**(महाभारते वनपर्वणि-२४३-४)**

महाभारतस्य प्रसङ्गः एषः - पाण्डवाः यदा वनवासिनः आसन् तदा एतान् पीडयितुम् इच्छन् दुर्योधनः द्वैतवनम् आगच्छति। तत्र गन्धर्वैः सह युद्धे पराभवं प्राप्नोति। गन्धर्वाः दुर्योधनं बन्धने स्थापयन्ति। कर्णः अपि पराजयं प्राप्नोति। तदा तत्र पाण्डवाः आगच्छन्ति। भीमार्जुनादयः यदा दुर्योधनस्य बन्धविमोचनं कर्तुं निराकुर्वन्ति तदा हितवचनानि वदन् धर्मराजः एवं वदति- "भीमसेन! वयं परस्परविरोधिनः स्याम। किन्तु तृतीया शक्तिः यदा आक्रमणं करोति तदा वयम् अभिन्नाः एव। परस्परं शत्रवः अपि वयं सम्भूय तृतीयशक्तिं सम्मुखीकुर्मः" इति।

'मार्जारयोः कलहे परिहारकत्वेन आगतः वानरः एव सर्वं खादितवान्' इति कथा बाल्ये पठिता स्यात् एव। 'द्वयोः कलहः तृतीयस्य लाभाय' इति नीतिः अस्माकं न अपरिचिता। किन्तु कियन्तः जनाः एतां नीतिं स्वजीवने अनुसरन्ति?

इतिहासं पठामः चेत् वयं ज्ञातुं शक्नुमः यत् बहुत्र परस्परकलहः एव नाशस्य कारणम् अभवत् इति। विदेशीयाः कथं वा अत्र भारते दृढमूलाः अभवन्? अङ्गुलिगणनीयाः केचन आगत्य कथम् अत्र सर्वान् पराजित्य शासनसूत्रं हस्ते स्वीकृतवन्तः? तेषां विशेषसामर्थ्यम् अत्र न कारणम्। अपि तु अत्रत्यः परस्परद्वेषः अन्योत्कर्षासहनशीलता च एव प्रधानं कारणम्।

अस्माकं सामाजिकजीवने 'वयं पञ्चशतं तु ते' इति परिस्थितिः यथा न भवेत् तथा जागरूकाः भवेम। 'वयं पञ्चोत्तरं शतम्' इत्येतां नीतिं सदा पालयेम।

# सङ्ख्याः (Numbers)

शिष्यः - आचार्य, अभिवादये ।

आचार्यः - आगच्छतु, उपविशतु वत्स !

शि- श्रीमन्, सङ्ख्याविषये मम केचन संशयाः आसन्....।

आ- आम्, भवता सह सम्भाषणे मया एषः अंशः लक्षितः । तदर्थम् अहं सङ्ख्याविषये ज्ञातव्यान् कांश्चन अंशान् सोदाहरणं वदामि । तदनन्तरं भवान् भवतः संशयान् प्रष्टुम् अर्हति ।

शि तथैव अस्तु ।

आ- * एकं, द्वे, त्रीणि, चत्वारि- एतासां सङ्ख्यानां लिङ्गभेदेन रूपभेदः अस्ति । यथा-
एकः (पु) एका (स्त्री) एकम् (न)
एवम् एव– द्वौ-द्वे द्वे, त्रयः-तिस्रः-त्रीणि, चत्वारः चतस्रः-चत्वारि इति च ।

* पञ्चतः नवदशपर्यन्तं स्थिताः सङ्ख्याः नित्यबहुवचनान्ताः । एतासां लिङ्गभेदेन रूपभेदः नास्ति ।
यथा- दश जनाः सन्ति, दश स्त्रियः सन्ति, दश फलानि सन्ति ।

* विंशतितः नवनवतिपर्यन्तम् स्थिताः सङ्ख्याः नित्यैकवचनान्ताः ।
यथा- विंशतिः जनाः, विंशतिः बालिकाः, विंशतिः पुष्पाणि, इति ।

शि- आचार्य ! अत्र विंशतिः इति एकवचनं, जनाः इति बहुवचनं च दृश्यते । विशेषण-विशेष्ययोः समानविभक्तिकत्वं भवेत् किल ?

आ- भवतः संशयः युक्तः एव । विशेषणविशेष्यभावविषये एव पुनः चिन्तयाम । यतः तत्रापि ज्ञातव्याः अंशाः बहवः सन्ति । प्रकृते च विंशतिः जनाः इति वचनभेदे सत्यपि न दोषाय, यतः विंशत्यादयः नित्यैकवचनान्ताः इति एतावत् सद्यः स्मरतु, तावता अलम् ।

शि- एवं तर्हि सविभक्तिकानाम् एतासां प्रयोगे अपि सङ्ख्या एकवचने विशेष्यपदं बहुवचने च किल ?

आ- युक्तम् एव उक्तं भवता। द्वित्राणि उदाहरणानि यथा– विंशत्यां जनेषु, विंशतेः जनानां, विंशत्या पुरुषैः, विंशत्या बालिकाभिः, विंशतिं फलानि, इत्यादीनि।

शि- एतादृशेषु स्थलेषु विंशतिजनानां, विंशतिबालिकाभिः इत्यादिरूपेण समासपूर्वकं कथनम् उचितं किल ?

आ- सत्यम्। वस्तुतः सौलभ्यदृष्ट्या व्यावहारिकदृष्ट्या च समासपूर्वकं कथनम् एव उचितम्...।

शि- एवं तर्हि शास्त्रे सङ्ख्यासमासे अनुपपत्तिः प्रदर्शिता वा ?

आ- आम्। व्याकरणे कुत्रचित् एषः विषयः प्रस्तुतः।[1] "दिग्वाचकाः सङ्ख्यावाचकाः च शब्दाः संज्ञायां केवलं समस्यन्ते न तु इतरत्र' इति। किन्तु 'त्रिलोकनाथः पितृसद्मगोचरः' 'त्रिलोकनाथेन सदा मखद्विषा' इत्यादि-कालिदासप्रयोगात्, 'नवरसरुचिरा' इति मम्मटेन उक्तत्वात्, इतरत्रापि एतादृशप्रयोगानां वर्तमानत्वात् च समासः कृतः चेत् न दोषाय इति सिद्धान्तितम्। सिद्धान्तकौमुद्याः बालमनोरमाव्याख्याने एतद्विषये विशेषचर्चा कृता दृश्यते। पूर्वोक्तेषु उदाहरणेषु विंशतिसङ्ख्याकाः जनाः विंशतिजनाः (मध्यमपदलोपी समासः) इति व्युत्पत्तिः प्रदर्शिता। एतदनुगुणं समासे कृते, न दोषाय।

शि- विंशतयः जनाः सन्ति इत्यस्य कः अर्थः सिध्यति ?

आ- विंशतित्रयं (६०) ततोऽप्यधिकं वा जनाः सन्ति इत्यर्थः लभ्यते। अस्तु तावत्, एतद्विषये अवशिष्टान् अंशान् पुनः परिशीलयिष्यामः।




[1] 'दिक्सङ्ख्ये संज्ञायाम्' - पाणिनिसूत्रम्



# चन्दमामा

फेब्रवरी — १९८६

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् रू. २-५०

वार्षिकं ग्राहकशुल्कम् रू. ३०-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

इदमिदानीं सम्पन्नः किल गणराज्योत्सवः ? वस्तुनिष्ठतया विचार्यमाणे एतादृशाः उत्सवाः अतीव औपचारिकतया आचर्यमाणाः सन्ति इति अङ्गीकरणीयम् एव भवति। सामान्याः जनाः चिन्तयन्ति- एते उत्सवाः शालासु इतर-कार्यालयेषु वा आचरणीयाः इति। यत्र शालासु कार्यालयेषु च आचर्यते तत्रापि न तथा विशेषोत्साहः। स्वातन्त्र्यप्राप्तेः अनन्तरं शतकार्धम् अपि न अतीतम्। तथापि एतादृशम् औदासीन्यम् ! एतद्विपरीततया नवरात्रादीन् उत्सवान् पश्यन्तु- एतान् सर्वोऽपि जनः सोत्साहं सश्रद्धं यथाशक्ति आचरति एव। तदपि सहस्रशः वर्षेभ्यः ! एवं तर्हि दोषः कुत्र ? अभिमानराहित्यं श्रद्धाराहित्यं अस्मदीयभावनाराहित्यं च कारणं किल ? एतदुदाहरणद्वयेन संस्कृतप्रचारतत्परैः अस्माभिः अपि नीतिः स्वीकरणीया। अस्माकं संस्कृतप्रचारं जनाः तदा एव अङ्गीकुर्वन्ति यदा च प्रीतिः अभिमानं श्रद्धा च जागरिता भवति। भाषासमृद्ध्या द्वित्राः आकृष्टाः भवेयुः। प्रीत्यादीनां जागरणेन तु लक्षशः जनान् आक्रष्टुं शक्नुमः।

सम्पुटः-२ फेब्रवरी-८६ सञ्चिका-११

प्रतिकृतिमूल्यम्- रू.२-५० वार्षिकं ग्राहकशुल्कम्- रू.३०/-



रसप्रश्नाः

# युक्तं युक्तेन योजयन्तु

[ 'अ'पट्टिकायां केचन शब्दाः सन्ति । तत्सम्बन्धिशब्दाः 'ब'पट्टिकायाम् इतस्ततः सन्ति । परस्परं युक्तेन युक्तं योजयन्तु ।

| | अ | ब |
|---|---|---|
| I | १. ऋतुसंहारः | १. जयदेवः |
| | २. गीतगोविन्दम् | २. श्रीहर्षः |
| | ३. नीतिशतकम् | ३. कालिदासः |
| | ४. गङ्गालहरी | ४. भर्तृहरिः |
| | ५. रत्नावली | ५. जगन्नाथः |
| II | १. पाणिनिः | १. मीमांसाशास्त्रम् |
| | २. आनन्दवर्धनः | २. आयुर्वेदः |
| | ३. वाग्भटः | ३. तर्कशास्त्रम् |
| | ४. जैमिनिः | ४. अलङ्कारशास्त्रम् |
| | ५. गदाधरः | ५. व्याकरणशास्त्रम् |
| III | १. चम्पूरामायणम् | १. अनन्तभट्टः |
| | २. नलचम्पूः | २. वेङ्कटाध्वरिः |
| | ३. विश्वगुणादर्शचम्पूः | ३. सोमदेवसूरिः |
| | ४. चम्पूभारतम् | ४. भोजदेवः |
| | ५. यशस्तिलकचम्पूः | ५. त्रिविक्रमभट्टः |
| IV | १. नभःस्पृशं दीप्तम् | १. रामकृष्णाश्रमः |
| | २. योगक्षेमं वहाम्यहम् | २. राष्ट्रिय संस्कृत संस्थानम् |
| | ३. तन्नो हंसः प्रचोदयात् | ३. जीवविमासंस्था |
| | ४. योऽनूचानः स नो महान् | ४. भारतसर्वकारः |
| | ५. सत्यमेव जयते | ५. भारतीयं वायुदलम् |

उत्तराणि–

I १) ३. २) १. ३) ४. ४) ५. ५) २. II १) ५. २) ४. ३) २. ४) १. ५) ३.

III १) ४. २) ५. ३) २. ४) १. ५) ३. IV १) ५. २) ३. ३) १. ४) २. ५) ४.



## शरावाकारकाः उपग्रहाः

ग्रहान्तरात् आगताः शरावाकारकाः उपग्रहाः (Flying Saucers) किं वस्तुतः भूमिसमीपम् आगच्छन्तः सन्ति? वस्तुस्थितिः यथाकथम् अपि स्यात् नाम। किन्तु अमेरिकावासिनी एल्लेन् क्रिस्टल्महोदया वदति- "मया एतादृशाः उपग्रहाः दृष्टाः। लोहनिर्मिताः एते आत्मानं परितः मेघम् उत्पादयन्ति। अतः एतेषां छायाचित्रग्रहणं दुःशकम्" इति।

## सौरशक्त्या सञ्चरणसमर्था नौका



जपानदेशीयः केनिट्र होरे नामकः सर्वप्रथमतया सौरशक्त्या सञ्चरणसमर्थया नौकया फेसिफिक समुद्रस्य अपरं तीरं प्राप्तवान्। होनोलूलुतः प्रस्थितः सः ६३०० कि.मी. दूरे स्थितं चिचिजिमा द्वीपं पञ्चसप्ततिदिनेषु (७५) प्राप्तवान्।



## एशियाखण्डे एव अतिदीर्घः सेतुः

एशीयाखण्डे अद्वितीयः, प्रपञ्चे तृतीयः च सेतुः सद्यःकाले मलेशियादेशे निर्मितः अस्ति। १३ कि.मी. दैर्घ्यात्मकः एषः सेतुः उत्तरपेनाङ्गमूडं प्रधानभूमिं च योजयति।

# भवन्तः जानन्ति वा?

१. अत्युन्नतः बुद्धविग्रहः प्रपञ्चे कुत्र अस्ति?
२. यत्र बुद्धस्य दन्ताः सुभद्रं स्थापिताः तादृशमन्दिरं कुत्र अस्ति?
३. 'भूमिः सूर्यं परितः भ्रमति' इति प्रतिपादितवान् इति कारणतः कः प्रसिद्धः शास्त्रवेत्ता अपराधित्वेन घोषितः?
४. विलियं विल्बर् सोर्स किं निमित्तं कार्यं कृतवान्?
५. एशिया खण्डे तादृशदेशः कः यत्र क्रैस्तजनाः अधिकतया निवसन्ति?

(उत्तराणि ६५ तमे पृष्ठे)

# अङ्गारकः

पूर्वम् अङ्गारकः नाम राक्षसः आसीत्। सः विविधराज्यानि गत्वा राजभवनं प्रविश्य राजकुमारीः अपहृत्य अरण्ये गुहायां बन्धने स्थापयति स्म।

एतस्य दुराचारं निवारयितुम् इच्छन् उज्जयिन्याः युवराजः महासेनः पराशक्तिं तपसा सन्तोष्य तस्याः वरप्रसादेन एकं खड्गं प्राप्तवान्।

एकदा महासेनः मृगयार्थम् अरण्ये सञ्चरन् आसीत्। तदा कश्चन भल्लूकः अभिमुखम् आगतः। सः भल्लूकः घट्टनेन रथम् तिर्यक् अपातयत्। आश्चर्यचकितः महासेनः रथात् अवतीर्य बाणप्रयोगं कृतवान्। केनापि बाणेन सः भल्लूकः न व्रणितः। किन्तु भल्लूकः महासेनं सम्मुखीकर्तुम् अनिच्छन् अरण्यस्य अन्तः पलायनम् अकरोत्।

महासेनः भल्लूकस्य अन्वेषणं कुर्वन् अरण्ये अटितवान्। सायङ्काले एकां गुहां प्राप्तवान् च। गुहातः सम्भाषणध्वनिः श्रूयते स्म।

एकः स्त्रीध्वनिः श्रुतः- "तात! भवान् भल्लूकवेषेण यावत् तिष्ठति तावत् भवतः अपायः न स्यात्। किन्तु यदा निजरूपेण तिष्ठति तदा अपायः आगतः चेत् किं करोति?" इति।

"किमर्थं भवत्याः वृथा सन्देहः? भवती स्मरतु यत् भवत्याः पितुः मम कस्मात् अपि अपायः नास्ति एव। यतः मदीयं वज्रशरीरम्। वामहस्तच्छेदेन केवलं भेद्यं तत्। अतः एव तस्मिन् हस्ते रत्ननिर्मितं कवचं धृतवान्" इति उक्तवान् अङ्गारकः।

'एषः एव अङ्गारकः भल्लूकरूपेण आगत्य मम रथं पातितवान्' इति ज्ञातवान् महासेनः। अतः सः प्रातःकालपर्यन्तं गुहायाः बहिः एव जागरूकतया आसीत्। अङ्गारकः बहिः यदा आगतः तदा तेन सह युद्धं कृत्वा दिव्येन खड्गेन तस्य वामहस्तं छेदितवान् महासेनः। अपरक्षणे अङ्गारकः भूमौ पतितवान्।

अनन्तरं महासेनः बन्धने स्थिताः राजकुमारीः उन्मोच्य सौन्दर्यराशिं अङ्गारककुमारीं परिणीतवान्। एतस्याः सेवार्थम् एव अङ्गारकः राजकुमारीः आनीतवान् आसीत्।





# पतनकारणम्

पूर्वम् अरावलीपर्वतप्रान्ते कस्मिंश्चित् वने कृष्णचन्द्रः नाम पण्डितः गुरुकुलं चालयति स्म। 'उत्तमगुरुः' इति समग्रे देशे तस्य कीर्तिः प्रसृता आसीत्। देशस्य विविध-कोणेभ्यः विद्यार्थिनः अध्ययनार्थं तस्य समीपम् आगच्छन्ति स्म। श्रेष्ठाः पण्डिताः बहवः तस्य शिष्याः एव। सः यथा सज्जनः तथैव उदारी अपि।

एकदा सायङ्काले गुरुकुलस्य वने कश्चन कोलाहलः श्रुतः। कुतूहलेन कृष्णचन्द्रः तत्र गतवान्। तत्र सः दृष्टवान् यत् एकं विद्यार्थिनम् इतरे चत्वारः विद्यार्थिनः दण्डयन्तः आसन्।

"किमर्थम् एतम् एवम् दण्डयन्ति ?" इति पृष्टवान् कृष्णचन्द्रः।

तदा एकः विद्यार्थी अग्रे आगत्य उक्तवान्- "श्रीमन् ! अस्माभिः रक्षितानि आम्रफलानि एषः खादितवान्। एतादृशं चौर्यम् एषः तदा तदा करोति। बहुवारं वयम् एतं सूचितवन्तः। अद्य तु चौर्यसमये एव एषः गृहीतः" इति।

कृष्णचन्द्रः विद्यार्थिनः मुखं दृष्टवान्। सः पश्चात्तापेन खिन्नः अस्ति। मुखम् अवनमय्य लज्जया भूमिं पश्यन् अस्ति।

"सर्वे माम् अनुसरन्तु" इति उक्त्वा कृष्णचन्द्रः ततः निर्गतवान्। यदा सर्वे विद्यार्थिनः पाठशालाम् आगत्य उपविष्टाः तदा सः तान् उद्दिश्य उक्तवान्- "प्रकृतौ अतीव चञ्चलं-जलम्। अल्पे अवकाशे प्राप्ते अपि तत् अधोमुखतया प्रवहति। अधोगतिः तस्य प्रकृतिः। पतनम् अपि एवम् एव। मानवः किञ्चिदिव दुर्बलः भवति चेदपि तदीयं मनः पतनमार्गम् अनुसरति। यथा जलस्य आघातेन पात्रस्य आकारः परिवर्तितः भवति



तथैव मानसिकदौर्बल्येन मानवस्य सर्वनाशः अपि भवेत्। उदाहरणरूपेण श्यामनामकस्य बालकस्य कथां श्रावयामि। सश्रद्धं शृण्वन्तु-

पूर्वं श्यामः नाम कश्चन बालकः आसीत्। श्यामः वस्तुतः बुद्धिमान्। किन्तु दुष्टानां सहवासेन सः सर्वथा निरुपयुक्तः जातः। मातापित्रोः ज्येष्ठानां च उपदेशेन किमपि प्रयोजनं न सिद्धम्। सः सर्वदा दुष्टैः सह अटति। धनस्य अपव्ययं करोति च। यदा व्ययार्थं गृहे धनं न लब्धं तदा सः चौर्यम् अपि आरब्धवान्। कालान्तरे सः प्रसिद्धः चोरः एव अभवत्।

श्यामः यस्मिन् देशे निवसति तस्य देशस्य राजा देवभक्तः। सः महता धनव्ययेन एकं देवमन्दिरं निर्मितवान्। तच्च मन्दिरम् अमृतशिलाभिः एव निर्मितम् आसीत्। देव्याः विग्रहः अपि अपूर्वः एव। विग्रहस्य कण्ठे अमूल्यः कश्चन हारः अपि आसीत्।

तस्य हारस्य वैशिष्ट्यम् आसीत् यत् तस्य मध्ये एकं वज्रं योजितम् आसीत्। वज्रस्य मूल्यं कोट्याधिकरूप्यकाणि। यत्र वज्रम् अस्ति तत्र सकलसौभाग्यं सिध्यति इति जनानां विश्वासः आसीत्।

तस्मिन् मन्दिरे प्रतिवर्षं नवदिनात्मकः उत्सवः सवैभवं प्रचलति स्म। एतम् उत्सवं द्रष्टुं न केवलं तद्देशस्य जनाः, अपि तु इतरदेशस्य राजानः ज्येष्ठाः अधिकारिणः च आगच्छन्ति स्म।

एवम् एकदा पार्श्वदेशस्य राजा कालनाथः एतम् उत्सवं द्रष्टुम् आगतवान्। अमूल्यस्य रत्नहारस्य उपरि तस्य दृष्टिः पतिता। 'एतादृशः उत्तमः हारः मत्समीपे अवश्यं भवेत्' इति सः मनसि एव निश्चयं कृतवान्।

उत्सवं समाप्य कालनाथः यद्यपि स्वदेशं गतवान्, किन्तु तस्य मनसि हारस्य विचारः कीटवत् बाधते स्म। अतः सः एतं हारम् आनेतुं विश्वासार्हम् एकं सेवकम् आदिष्टवान्। सेवकः प्रथमम् एतत् निराकृतवान्। किन्तु यदा महाराजेन विपुलधनस्य आशा प्रदर्शिता तदा सः एतत् कार्यम् अङ्गीकृतवान्।

सेवकः मन्दिरम् आगत्य पूजकाय धनस्य आशां प्रदर्शितवान्। धनेन को वा वशे न आगच्छति? पूजकः अपि कालनाथस्य अस्मिन् कुतन्त्रे सम्मिलितः अभवत्। रात्रौ हारः चोरणीयः इति तौ निश्चितवन्तौ।

तद्दिने एव श्यामः स्नेहितैः सह अटनं कृत्वा मार्गे पिपासानिवारणार्थं देवालयसमीपे स्थितस्य सरोवरस्य समीपम् आगतवान्। समीपे एव पूजकः अन्यः सेवकः च तेन दृष्टौ। 'अस्मिन् रात्रिकाले एतयोः देवालये किं कार्यं स्यात्? किमर्थम् एतौ चोरौ इव भीत्या पदानि स्थापयन्ति?' इति कुतूहलः उत्पन्नः श्यामस्य मनसि।

देवालयं प्रति तयोः गमनं दृष्ट्वा श्यामः धावन् गत्वा आलयस्य अन्तः निलीय स्थितवान्। अल्पे एव काले पूजकः एकाकी देवालयं प्रविष्टवान्। द्वारम् उद्घाट्य अन्तः आगतवान् च।

तदा श्यामः अपि तम् अनुसरन् गर्भगृहं प्रविश्य "श्रीमन्! अत्र किं करोति भवान्?" इति पृष्टवान्।

अविचिन्तितया एतया घटनया पूजकः दिग्भ्रान्तः। तस्य हस्ततः हारः पतितः।

तदा श्यामः हारम् उन्नीय परिशीलयन् उक्तवान्- "भीतिः मास्तु। हारः चौर्येण विक्रेतव्यः इति किल भवतः अभिप्रायः? भवता सह आगतवान् अन्यः कः?" इति।

पूजकः आत्मनि धैर्यं पूरयन् कम्पमानेन





स्वरेण वास्तविकं विषयं निवेदितवान्। तदा श्याम पृष्टवान्- "विदेशीयाय दत्त्वा अल्पं धनं यत् स्वीक्रियते तदपेक्षया अस्माकं राज्ये एव विक्रयणं वरं किल ?" इति।

पूजकः एतं प्रस्तावं सन्तोषेण अङ्गीकृतवान्। अनन्तरं तौ हारं गृहीत्वा बहिः आगत्य गर्भगृहस्य द्वारं यथापूर्वं कीलितवन्तौ। निःशब्दतया आगत्य एतयोः आगमनं प्रतीक्षमाणं गुप्तचरं दृढया अयःशलाकया बलेन ताडितवन्तौ। गुप्तचरः विना शब्दं तत्रैव पतितवान्। एतौ गर्भगृहस्य कुञ्चिकां तस्य पार्श्वे क्षिप्त्वा बहिः आगत्य ग्रामसीमाम् अतिक्रम्य गतवन्तौ।

मार्गे उभयोः अपि समाना चिन्ता 'रत्नहारः मया एकेन एव स्वीकरणीयः' इति। अनन्तरदिने तौ एकं वनं प्रविष्टवन्तौ। तत्र छायायाम् उपविश्य उपाहारगृहतः आनीतं पाथेयं खादितवन्तौ। किन्तु पाथेये अन्यः यथा न जानीयात् तथा उभाभ्याम् अपि विषं योजितम् आसीत्। तत्कारणतः तौ तत्रैव विसंज्ञौ जातौ" इति कथां समापितवान् कृष्णचन्द्रः।

अनन्तरं सः शिष्यान् उद्दिश्य पुनः उक्तवान्- "वस्तुतः विचार्यमाणे श्यामः पूजकः वा न तथा दुष्टौ। तथापि अणुरूपेण पतनम् आरब्धम्। छिद्रेष्वनर्थाः बहुलीभवन्ति किल ! अतः तयोः सर्वनाशः एव सम्पन्नः" इति।

कथां श्रुत्वा भारभूतमनस्काः सन्तः सर्वे विद्यार्थिनः ततः उत्थाय गतवन्तः। यः चौर्यं कृतवान् आसीत् सः कृष्णचन्द्रस्य पादौ गृहीत्वा अश्रूणि पातयन्- "मया मम पतनकारणं ज्ञातम्। इतःपरम् एतादृशं कार्यं न करोमि" इति उक्तवान्।

यदा शिष्याः सर्वे ततः निर्गताः तदा कृष्णचन्द्रः गृहस्य अन्तः आगतवान्। तदा तस्य पत्नी व्यथया उक्तवती- "एषः विद्यार्थी इतःपरं सन्मार्गम् अनुसरेत्। किन्तु श्यामस्य पूजकस्य च गतिः शोचनीया अभवत् किल ? अहो दुरदृष्टम् ! एवं न भवितव्यम् आसीत्" इति।

कृष्णचन्द्रः हसन् उक्तवान्- "पूजकस्य तु दुरदृष्टम्। किन्तु श्यामस्य न दुरदृष्टम्" इति।

"तत् कथम् ?" इति कुतूहलेन आश्चर्येण च पृष्टवती तस्य पत्नी।

"श्याम तदा न मृतः। वार्धक्यकारणतः विषसेवनेन पूजकः तत्क्षणे एव दिवङ्गतः। श्यामः न दिवङ्गतः। यदा सः वेदनाम् अनुभवन् आसीत् तदा आयुर्वेदपारङ्गतः महामन्त्रतन्त्रज्ञः कश्चन धर्मात्मा तत्र आगत्य तस्य प्राणान् रक्षितवान्। श्यामस्य पूर्वतनं वृत्तान्तं श्रुत्वा अपि दयया तं स्वकीयम् आश्रमं नीत्वा ज्ञानभिक्षया अनुगृहीतवान्" इति उक्तवान् कृष्णचन्द्रः।

"एवं तर्हि अदृष्टवशात् श्यामः प्राणान् धृतवान्। किन्तु सः द्वयोः जीविनोः मरणे कारणीभूतः आसीत् किल ? तदर्थं तेन प्रायश्चित्तम् अनुभोक्तव्यम् आसीत्" इति उक्तवती पत्नी।

"वस्तुतः प्रवृत्तम् अपि एवम् एव। सः धर्मात्मा श्यामं शिष्यत्वेन अङ्गीकृतवान्, किन्तु गुरुकुलवासार्थं तस्मै अनुमतिं न दत्तवान्। श्यामः एकवर्षं यावत् समीपे अरण्ये गुहायां वसति स्म। किन्तु तस्य ज्ञानपिपासा बुद्धिमत्ता च असाधारणी आसीत्। अतः सः पाण्डित्यं प्राप्य कृष्णचन्द्रनाम्ना ख्यातः अभवत्" इति मन्दहासपूर्वकम् उक्तवान् कृष्णचन्द्रः।

'एवं तर्हि सः श्यामः भवान् एव वा ?' इति उद्गारं प्रकटयन्ती पत्नी पृष्टवती- "रत्नहारः कुत्र गतः ?" इति।

"सः महाराजसमीपं प्रापितः। गुरोः प्रभावतः अहं दण्डनतः रक्षितः अभवम्। जलम् इव अधोमार्गम् अनुसरन्तं मां सत्मार्गे आनीय पुनर्जन्म दत्तवान् सः गुरुः। तस्य शिष्यः अहम् इति मम अभिमानस्य विषयः यदि सः गुरुः अरण्ये मिलितः न स्यात् तर्हि न जाने, मम का गतिः अभविष्यत्" इति उक्तवान् कृष्णचन्द्रः।





# परिवर्तनम्

पूर्वं गणपवरनामके ग्रामे वेङ्कटाचलनामकः सेवकः आसीत्। अन्यगृहेषु कार्यं कुर्वन् सः जीवनं यापयति स्म। प्रतिदिनं क्षेत्रेषु कार्याणि कृत्वा लब्धेन धनेन तृप्तः भवति स्म सः। कदापि विनाकारणं अन्येषां विषयेषु न प्रविशति स्म। तस्य पत्न्याः त्रिपुरायाः चरितं तु तद्विरुद्धम्। अन्येषां दूषणम् एव तस्याः प्रमुखं कार्यम्। तस्याः स्वभावं जानन् अपि वेङ्कटाचलः कदापि तस्यै विरुद्धं न वदति स्म।

एकस्मिन् दिने त्रिपुरा स्वमहिषीम् उद्देश-पूर्वकं पार्श्वगृहस्य वाटिकां प्रेषितवती। तत्र महिषी यथेष्टं सस्यं खादित्वा अवशिष्टं च विनश्य आगतवती।

एतेन वाटिकायाः यजमानः रामदेवः बहु कुपितः अभवत्। तथापि सः त्रिपुरायाः स्वभावं ज्ञात्वा तूष्णीं स्थितवान्। किन्तु मनसि एव चिन्तितवान्- "यथाकथं मम वाटिका रक्षणीया। त्रिपुरां वदामि चेत् सा नैव शृणोति। केवलम् आक्रोशति। कथनेन किमपि विशेषप्रयोजनं नास्ति" इति।

अतः सः वाटिकायां विषसस्यानि वर्धितवान्। यदा तानि सस्यानि प्रवृद्धानि तदा त्रिपुरा तानि विषसस्यानि इति अज्ञात्वा पुनः महिषीं तत्र प्रेषितवती। विषसस्यं खादित्वा महिष्याः उदरं शोफतां प्राप्तम्। एकस्मिन् एव दिने महिषी मृता च।

अतः त्रिपुरायाः शोकः अवर्णनीयः जातः। "पश्यतु, इतःपरं अत्र जीवितुं न शक्यते। अस्माकं सुखम् असहमानेन येन केनापि विषदानेन महिषी मारिता। अथवा दृष्टिपातः अभवत् इति मन्ये। कः अपि मन्त्रप्रयोगः अपि स्यात्। एतत् कस्य पापम्-अहं न जाने"

इति पतिम् उक्तवती सा।

वेङ्कटाचलेन सर्वम् अवगतमासीत्। सः "अस्तु, गतं न शोचयेत्। त्यजतु तं विषयम्। इदानीं कोलाहलेन किं प्रयोजनम्?" इति शान्तस्वरेण एव उक्तवान्।

त्रिपुरा तानि वचनानि श्रुत्वा महाकाली एव अभवत्। "किं वदति भवान्? एषः नैव ग्रामः, अपि तु श्मशानम्। एते नैव जनाः, अपि तु पिशाचाः। अत्र वासः दुःसाध्यः। अहं तु इतःपरम् अत्र एकं दिनम् अपि न तिष्ठामि। श्वः एव मम मातृगृहं गच्छामि। भवान् अपि तत्रैव आगच्छतु। तत्रैव किमपि कार्यं लभ्येत" इति उक्तवती।

पत्न्याः वचनस्य प्रत्युत्तरं दातुं न इच्छन् वेङ्कटाचलः मौनं तया सह तस्याः मातृगृहं प्रति प्रस्थितः। मार्गे एकः सरोवरः आसीत्। तस्मिन् मासेशः नामकः धीवरः मत्स्यानां कृते द्वाभ्यां हस्ताभ्यां बडिशं क्षिपति स्म। यदा एतौ सरोवरस्य समीपम् आगतवन्तौ तदा मासेशः एकं मत्स्यं गृहीत्वा मत्स्याधान्यां स्थापितवान्।

तत् दृष्ट्वा त्रिपुरा नासिकायाः उपरि अङ्गुलीं संस्थाप्य- "एतदेव खलु द्वाभ्यां हस्ताभ्याम् आर्जनं नाम। तस्मिन् हस्ते अपि एकं बडिशम्, एतस्मिन् हस्ते अपि एकं बडिशम्। एषः तीरे तूष्णीम् उपविश्य एव एतावत्



अर्जयति! अस्तु, अस्य लघुमत्स्यस्य कियत् मूल्यं वदति इति पश्यामि" इति मत्स्याधान्यां हस्तं स्थापितवती। तदा अन्तः स्थितेन कर्कटकेन तस्याः हस्तः दष्टः।

वेदनाम् असहमाना त्रिपुरा दासेशं दृष्ट्वा "अरे रे! मन्दमते धीवर! किम् एतत्? मत्स्यान् कर्कटकान् च एकस्मिन् एव कण्डोले स्थापितवान्?" इति पृष्टवती।

तस्याः वचनं सम्पूर्णं सावधानं श्रुत्वा यदा सा तूष्णीं स्थिता तदा धीवरः अवदत्- "मातः! शृणोतु, एते मत्स्याः कर्कटकाः च जले एकत्र एव वसन्ति। एवमेव खलु प्रपञ्चे दुष्टाः सज्जनाः च अपि जीवन्ति? सत्यं न वा?" इति।

"अरे रे ! स्थगयतु भवतः हितोपदेशम्। एतेन कर्कटकदंशनेन मम प्राणाः निर्गताः इव। निवारयतु एतं प्रथमम्" इति उक्तवती।

पुनः मासेशः अवदत्- "मातः ! केचन भवन्ति - सर्वदा कलहः परधनापेक्षा च तेषां स्वभावः। एषः कर्कटकः अपि तथैव। दुराशाग्रस्तः अन्यान् सर्वदा पीडयति च। तस्य स्वभावः एव तादृशः। किन्तु मातः, अहं पृच्छामि- किमर्थं भवती तत्र हस्तं स्थापितवती ? सः दुष्टजन्तुः इति न जानाति वा भवती ? दुष्टसहवासः प्रथमं परिहरणीयः किल ?" इति।

वेङ्कटाचलः अपि वार्धक्ये स्वग्रामं त्यक्तुं न इच्छति स्म। अतः एतस्य सन्दर्भस्य उपयोगं स्वीकुर्वन् पत्नीम् उक्तवान् सः- "तस्य वचसि सत्यांशः अस्ति। एतत् वचनं न केवलं कर्कटकस्य, अस्माकम् अपि सङ्गच्छते। यदि अस्मासु दोषः अस्ति, तदा गणपवरवासः किं करोति ? अथवा अन्यत्र गमनेन किं भविष्यति ? अस्माकं दोषः निवारणीयः। दुर्जनसहवासः त्यक्तव्यः। भवत्या कर्कटकं स्पृष्ट्वा अपराधः कृतः। सत्यं किल ?" इति पृष्टवान्।

तावति काले त्रिपुरया अवगतं यत् धीवरः माम् उद्दिश्य एव सर्वं कथितवान् इति।

वेङ्कटाचलः पुनः उक्तवान्- "शृणोतु ! तस्य वचसि नीतिः अपि अस्ति। यदि अस्माकं व्यवहारः आचारः च सम्यक् तदा ग्रामः एव सम्यक् भवति। एतावत्कालपर्यन्तं जीविते ग्रामे एव यदि वासः दुःसाध्यः तर्हि कथम् अन्यस्मिन् ग्रामे सः शक्यः ? प्रथमम् अस्माकं दुःस्वभावः परिवर्तनीयः" इति।

अनन्तरं त्रिपुरा उक्तवती- "अस्तु, इदानीं अन्यग्रामगमनं मास्तु। कर्कटकः उचितानुचितं न जानातु नाम। मयि तु विचारशक्तिः अस्ति। गच्छावः पुनः गृहम्" इति।

वेङ्कटाचलः तं धीवरं मनसि एव अभिवन्द्य पत्न्या सह गृहं प्रत्यागतवान्।






## १४

[चन्द्रवर्मा पर्वतमूले स्थितम् एकं कुटीरं प्रविष्टवान्। तत्र कश्चन वृद्धः चन्द्रवर्माणं राजभटं मन्यमानः विरोधं प्रदर्शितवान्। परस्परपरिचयानन्तरं चन्द्रवर्मणा ज्ञातं यत् तस्य वृद्धस्य पुत्रं राजभटाः बद्ध्वा नीतवन्त; इति। वृद्धस्य समीपे कांस्यदुर्गमार्गप्रदर्शकः चित्रपटः अपि आसीत्। अत्रान्तरे राजभटाः आक्रमणं कृतवन्तः। वृद्धः ततः पलायितवान्। ततः....]

कुटीरतः तेजस्विनं युवकं चन्द्रवर्माणं बहिः आगच्छन्तं दृष्ट्वा राजभटाः चकिताः। 'कुटिरे वृद्धः स्यात्' इति तेषां निरीक्षा आसीत्। 'सुलभतया एतं वृद्धं बद्ध्वा महाराजसमीपं नेष्यामः। तेन विपुलं परितोषिकं प्राप्स्यामः' इति तेषाम् आलोचना आसीत्। किन्तु वृद्धस्य स्थाने स्थितं युवकं दृष्ट्वा ते किञ्चित् अधीराः जाताः। भटनायकः दर्पेण पृष्टवान्- "कः भवान्? सः वृद्धः कुत्र गतवान्?" इति। "शीघ्रं वदतु। यदि समीचीनम् उत्तरं न वदति तर्हि...." इति वदन् सः खड्गम् कोषतः आकृष्य चन्द्रवर्मणः समीपम् आगतवान्।

"भवन्तः कं वृद्धं पृच्छन्ति इति अहं न जानामि। के भवन्तः? किमर्थम् आगताः? दण्डमार्गः मद्विषये सर्वथा विफलः एव। शस्त्रं प्रतिस्वीकृत्य ऋजुतया व्यवहरन्तु प्रथमम्" इति चन्द्रवर्मा अपि खड्गं हस्ते स्वीकृत्य गर्जन-




स्वरेण उक्तवान्।

चन्द्रवर्मणः ध्वनेः दाढर्य, खड्गस्वीकारे प्रकटीभूतां निर्भीकताम्, अचलम् आत्मविश्वासं च दृष्ट्वा भटनायकः स्वयं भीतः।

परिस्थितिम् इतोऽपि अधिकं स्वानुकूलां कर्तुम् इच्छन् चन्द्रवर्मा गर्जितवान्- ''रे, के भवन्तः ? कस्य महाराजस्य आश्रये जीविकां निर्वहन्ति ? वदन्तु प्रथमम्। समूहाक्रमणेन भवन्तः मां वशीकर्तुं न शक्नुवन्ति। मम रक्षणार्थं पृष्ठतः कुटीरस्य भित्तयः सन्ति। अतः भवद्भिः एकैकशः युद्धं करणीयम्। तदा तु एकस्य अनन्तरम् अपरस्य मरणम्! केवलम् अहं वचनशूरः न। पश्यन्तु मम खड्गप्रहारस्य रुचिम्'' इति। अनन्तरं हुँकृत्य उत्प्लुत्य अग्रे गतवान् च।

'चन्द्रवर्मणा उक्तं सत्यम् एव स्यात्' इति ज्ञातवान् भटनायकः। परितः आक्रम्य वशीकर्तुं तु न शक्यते। प्रत्यक्षयुद्धं कृतं चेत् अस्मान् सर्वान् मारयितुम् एषः समर्थः इत्यपि सत्यम् एव। शरीरसौष्ठवं गतिचातुर्यं च एतत् प्रमाणीकरोति।'

एतत्सर्वं क्षणमात्रे विचिन्त्य भटनायकः खड्गं प्रतिस्वीकुर्वन् ''महोदय! भवान् समर्थः योधः इव भाति। समानशीलानां योधानाम् मध्ये विरोधः किमर्थम्? तत्रापि अपरिचितानाम् अस्माकं मध्ये! अनिरीक्षिततया विचित्रपरिस्थितौ भवतः दर्शनं जातम् इत्यतः भवतः सामर्थ्यं निर्लक्ष्य योधसामान्यं दर्पं प्रदर्शितवान् अहम्। क्षाम्यतु अस्मान्। कञ्चित् वृद्धम् ग्रहीतुं वयं राजाज्ञानुसारम् अरण्ये अटन्तः स्मः। अस्तु तावत्, इतःपरं वयं स्वकर्तव्यम् अनुसरामः'' इति उक्त्वा ततः निर्गन्तुं प्रवृत्तः इव।

'स्वकीयः उपायः फलितः' इति सन्तोषम् अनुभूतवान् चन्द्रवर्मा। तथापि सः पूर्वतनेन एव दर्पेण पृष्टवान्- ''भवतां राजा कः?'' इति।

''एतद्देशस्य महाराजं भवान् न जानाति ? यस्मिन् प्रदेशे सञ्चरति तस्य देशस्य शासकं भवान् न जानाति इत्येतत् आश्चर्यकरम् एव'' इति उक्तवान् भटनायकः।



तदा चन्द्रवर्मा- "स च कश्चन कालः आसीत् यत्र अहं राज्यं, तस्य राजानं, राज्य-सीमां च ज्ञातुम् उत्सुकः आसम्। इदानीं तु मम दृष्टौ एकः एव महाराजः अस्ति। सः च शिवसिंहमहाराजः। सः शीघ्रातिशीघ्रं द्रष्टव्यः इति मम गुरुवर्येण आज्ञा कृता अस्ति। एतदर्थम् अहं भरतखण्डस्य तत्कोणतः एतत्-कोणम् आगतवान् अस्मि। अस्मिन् निर्जने स्थले कुटीरं दृष्ट्वा कुतूहलेन अन्तः प्रविष्ट-वान्। अत्रान्तरे भवन्तः आगताः। अस्तु तावत्। अहं यथापूर्वम् मम मार्गम् अनुसरामि" इति चातुर्येण उक्त्वा ततः गन्तुम् उद्युक्तः अभवत्।

चन्द्रवर्मणः वचनेन भटनायकः तत्-सहकारिणः च आश्चर्यचकिताः। ततः गन्तुम् उद्युक्तस्य चन्द्रवर्मणः समीपं गत्वा भटप्रमुखः उक्तवान्- "श्रीमन्! क्षणं तिष्ठतु। भवतः वचनं श्रुत्वा अहं काकतालीयं न्यायं स्मरामि। भवान् यस्य शिवसिंहमहाराजस्य अन्वेषणार्थं प्रयाणं कुर्वन् अस्ति सः एव एतद्देशस्य राजा। वयं शिवसिंहमहाराजस्य भटाः। भवतः कार्यसिद्धेः कालः सन्निहितः इति भाति। अतः एव वयम् अत्र सम्मिलिताः" इति।

चन्द्रवर्मा कृतकम् अत्याश्चर्यं प्रकटयन्- "एवं वा! धन्योऽहम्। धन्योऽहम्। मम कार्यं सिद्धम् इव। गुरोः आज्ञा फलवती भवेद् वा न वा इति मम सन्देहः आसीत्। दैववशात् भवन्तः लब्धाः। भवद्भिः बहुधा उपकृतः अहम्। गच्छामः तावत्। एतत्क्षणे एव शिवसिंहस्य दर्शनं प्राप्नोमि' इति उक्त्वा गमनत्वरां प्रकटीकृतवान्।

भटनायकः स्वसहकारिणीः अर्थगर्भितदृष्ट्या दृष्ट्वा पुनः सन्देहं प्रकाशयन् उक्तवान्- "महोदय! 'किमर्थं वा शिवसिंहमहाराजः द्रष्टव्यः इति भवतः गुरुवर्येण आज्ञा कृता अस्ति' इति निवेदयति वा? यतः यं वयं महाराजस्य समीपं नयामः तस्य परिचयः वक्तव्यः किल? महाराजाय भवतः आगमन-कारणं निवेदनीयं किल? तदर्थम् अहं पृष्ट-



वान्" इति।

"तत्सर्वं गोप्यम्। अहम् एव महाराजाय सर्वं निवेदयिष्यामि" इति उक्त्वा चन्द्रवर्मा आकाशं पश्यन्- "अये कांस्यदुर्ग! अचिरात् एव भवन्तं प्राप्स्यामि" इति उद्गारं प्रकटीकृतवान्।

"कांस्यदुर्गम्! भवान् अपि तद्विषये जानाति वा? कुत्रापि दूरे स्थितः भवान् तद्विषयं कथं ज्ञातवान्?" इति अत्याश्चर्येण पृष्टवान् भटनायकः।

"अये! किम् एतत् विपरीतम्? कांस्यदुर्गविषयम् अहं मम गुरुः च केवलं जानीवः इति मम कल्पना आसीत्। किन्तु इदानीं ज्ञातं यत् भवन्तः अपि तत् जानन्ति इति। कश्चित् महाराजः तद्विषयं ज्ञातवान् स्यात् तर्हि न तत्र आश्चर्यम्। किन्तु सामान्याः भटाः भवन्तः जानन्ति किल? किम् एतत् आश्चर्यम्! अत्याश्चर्यम्!" इति पुनरपि महदाश्चर्यं प्रकटितवान् चन्द्रवर्मा।

"तावत् आश्चर्यस्य अत्र का प्रसक्तिः? कांस्यदुर्गसम्बन्धि किञ्चन रहस्यं ज्ञातुम् एव वयम् अत्र अटन्तः कुटिलस्य कस्यचित् वृद्धस्य अन्वेषणं कुर्वन्तः स्मः" इति उक्तवान् भटनायकः।

तदा चन्द्रवर्मा दक्षिणहस्तस्य तलम् क्षणकालं दृष्ट्वा उक्तवान्- "अहो, इदानीं ज्ञातम्! तस्य वृद्धस्य समीपे कांस्यदुर्गगमनार्थं साहाय्यकः चित्रपटः अस्ति इति भवतां महाराजस्य सन्देहः। अतः एव भवतां महाराजः तदीयं पुत्रं देवलं कारागारे स्थापितमान्। सत्यं किल एतत्सर्वम्? किन्तु भवतां महाराजः मुग्धमनस्कः। वस्तुस्थितिः अन्या एव अस्ति। भवतां महाराजः तत् न जानाति" इति।

भटनायकः चन्द्रवर्माणं कुतूहलेन पश्यन् उक्तवान्- "महोदय! भवान् वस्तुतः कश्चन महात्मा एव। दक्षिणकरतलं दृष्ट्वा वस्तुस्थितिं यथायथं वदति किल! किम् आश्चर्यम् एतत्!" इति।

"भवताम् आश्चर्यम्। मम तु सहजम्" इति उदासीनतया उक्त्वा चन्द्रवर्मा भटनायकम्

उद्दिश्य- "भवन्तः तत्र दूरे शिलाराशेः पृष्ठतः प्रपाते मम प्रतीक्षां कुर्वन्तु। अहं क्षणकालं ध्यानं कृत्वा आगच्छामि। अनन्तरं सर्वे राज-दर्शनार्थं गमिष्यामः। सत्कार्ये विलम्बः न करणीयः। गच्छन्तु तावत्। अहम् अपि ध्यानं समाप्य अनुपदम् एव भवताम् अनुसरणं करोमि" इति आज्ञां कृतवान्।

'एवं सधैर्यं व्यवहरतः चन्द्रवर्मणः अधीने अमानुषशक्तयः स्युः एव' इति निश्चितवान् भटनायकः। अतः सः मन्त्रमुग्धः इव 'यथा-ज्ञापयति देवः' इति वदन् अनुचरैः सह प्रपातम् उद्दिश्य गतवान्। यदा ते शिला-प्रदेशम् अतिक्रम्य गताः तदा चन्द्रवर्मा समीपस्थं वृक्षसमूहं प्रविश्य- "अये जाम्बवन्! सर्वं सुखान्तं भविष्यति। युक्त्या वार्तालापः कृतः। देवलस्य कोऽपि अपायः नास्ति। भवान् कुत्र निलीनः?" इति उच्चस्वरेण पृष्टवान्।

उच्चैः आह्वानं श्रुत्वा वृद्धः वृक्षसमूहतः बहिः आगत्य परितः पश्यन् चन्द्रवर्मणः समीपम् आगत्य पृष्टवान्- "किम् अहं जाम्ब-वान् वा?" इति।

"वृद्ध इति आह्वानम् अनुचितम् इति एवम् आहूतवान्। इदानीम् अहं शिवसिंहस्य समीपं गमिष्यामि। भवतः पुत्रं देवलं कारा-गारतः उन्मोच्य मया सह नयामि। कांस्यदुर्गे



यावत् प्राप्यते तस्य कञ्चन भागं दापयामि अपि। गमनमार्गसूचकः चित्रपटः कुत्र इति प्रथमं, वदतु पर्याप्तम्" इति उक्तवान् चन्द्रवर्मा।

"भवतः वचने विश्वासं स्थापयामि वा अहम्?" इति सन्देहं प्रकटयन् पृष्टवान् चन्द्रवर्मा।

"तत् भवदधीनम्। किन्तु मयि अविश्वस्य भवान् किं वा साधयेत्? यदि विश्वसिति तर्हि भवतः, भवतः पुत्रस्य च हितं सिध्येत्। कांस्यदुर्गस्य स्थलं तु मया ज्ञातम्। अतः केनापि प्रयत्नेन तत्र गमिष्यामि एव। भवतः समीपे स्थितः चित्रपटः यदि लभ्येत तर्हि वृथाप्रयासः न स्यात्। तदर्थम् एव अहं तं पटं पृष्टवान्। यदि भवान् इच्छति तर्हि ददातु। अन्यथा



अहं मार्गान्तरं चिन्तयामि'' इति उक्तवान् चन्द्रवर्मा ।

एतस्य श्रवणानन्तरं वृद्धः किमपि अनुक्त्वा वस्त्रेण रहस्यरूपेण स्थापितं ताडपत्राणां बन्धं बहिः आनीय मयूरपिञ्छम् इव वृत्ताकारेण उद्घाट्य चन्द्रवर्मणे प्रदर्शितवान्। उक्तवान् च- ''पश्यतु, एषः एव कांस्यदुर्गस्य मार्गप्रदर्शकः चित्रपटः'' इति ।

चन्द्रवर्मा तत्रत्यं चित्रं श्रद्धया परिशीलितवान् । तत्र पर्वताः, नद्यः, वनानि, मरुभूमयः च चित्रिताः आसन् । समुद्रचित्रस्य पार्श्वे सुविशालम् एकं दुर्गं चित्रितम् आसीत् । दुर्गस्य अन्तः बहूनि भवनानि चित्रितानि दृश्यन्ते स्म । तानि भवनानि धूमेन आवृतानि इव ।

चन्द्रवर्मा चित्रं दृष्ट्वा आत्मगतम् इव उक्तवान्- ''वनानि नद्यः पर्वतान् मरुभूमीः च अतिक्रम्य मानवमात्रेण दुर्गसमीपं गन्तुं शक्येत वा ?'' इति ।

''एतं कांस्यदुर्गम् मम पूर्वजेषु एकः एव दृष्टवान् । अहं तु वृद्धः सञ्जातः । अन्यथा अहम् एव दुर्गम् अन्विष्य गच्छेयम्'' इति उक्तवान् वृद्धः ।

तदा चन्द्रवर्मा हसन् उक्तवान्- ''वृद्धस्य अपि भवतः उत्साहः न कुण्ठितः । अस्तु, एतं चित्रपटं मह्यं ददातु । अहम् एव अत्र सूचितं मार्गम् अनुसृत्य गमिष्यामि । भवतः पुत्रं देवलम् अपि आत्मना सह नेष्यामि । भवान् तावत्पर्यन्तम् अत्र एव निवसतु। अथवा शिवसिंहम् उक्त्वा नगरे भवतः वसत्यर्थं व्यवस्थां कारयिष्यामि । भवान् राजधान्याम् एव सुखं निवसतु नाम'' इति ।

वृद्धः विशेषसन्तोषं किमपि न प्रकटयन् चित्रपटं चन्द्रवर्मणे दत्त्वा उक्तवान्- ''अत्र वञ्चना कापि नास्ति किल ? आत्मसाक्षितया व्यवहरतु । वृद्धस्य मम वञ्चना महापापकारिणी । दैवे विश्वस्य भवते अमूल्यम् एतं पटं ददामि'' इति ।

''भवन्तं भवतः पुत्रं वा न वञ्चयामि एव । यदि शिवसिंहराजः सन्मार्गगामी स्यात् तर्हि

तम् अपि न वञ्चयामि। अन्यच्च....'' इति यावत् चन्द्रवर्मा वचनं न समापितवान् ततः पूर्वम् एव अश्वस्य खुरपुटध्वनिः स्पष्टतया श्रुतः।

चन्द्रवर्मा शिलाराशेः प्रदेशं परीक्षादृष्ट्या दृष्टवान्। भटनायकः अश्वेन सह पर्वतम् आरुह्य कुटीरम् उद्दिश्य आगच्छन् तेन दृष्टः।

एतत् दृष्ट्वा चन्द्रवर्मा वृद्धम् उद्दिश्य- ''अहं राजभटैः सह रुद्रपुरं गत्वा राजानं प्रथमं पश्यामि। सद्यः भवान् अत्र कुटीरे एव निवसतु। अचिरात् एव नगरे भवतः वसत्यर्थं व्यवस्थां कारयिष्यामि। तत्र भवान् निरातङ्कं निवसितुम् अर्हति'' इति उक्त्वा कुटीरम् उद्दिश्य वेगेन गतवान्।

चन्द्रवर्माणं स्वाभिमुखम् आगच्छन्तं दृष्ट्वा भटनायकः अश्वतः अवतीर्य- ''श्रीमन्! बहोः कालात् अनन्तरम् अपि भवतः अनागमनं दृष्ट्वा अहं स्वयम् आगतवान्। एतम् अश्वं भवदर्थम् आनीतवान्। मदर्थम् अन्यः अश्वः अस्ति एव। भवतः आगमनवार्तां राजधानीं प्रति प्रेषितवान् अपि'' इति उक्तवान्।

''कासाञ्चित् शक्तीनाम् आवाहनार्थम् अहं वृक्षसमूहं गतवान् आसम्। तासु शक्तिषु एका अपि भवतः महाराजस्य विषये सदभिप्रायं न प्रकटितवती। एवं तर्हि भवतः



महाराजः न सज्जनः? अथवा मम गुरुवर्येण सूचितः शिवसिंहः अन्यः एव स्यात् वा?'' इति उक्तवान् चन्द्रवर्मा।

''तथा किमपि नास्ति एव। अस्माकं महाराजः दुष्टः वा सज्जनः वा इति भटाः वयं किं जानीमः? नागरिकाः अन्यस्य देशस्य राजानः च तद्विषये जानीयुः। अस्माकं तु समीचीनं भोजनं वेतनं च आवश्यकम्। तत् समीचीनतया दीयते चेत् महाराजः सज्जनः। अन्यथा सः दुष्टः। एतावदेव अस्माकं योग्यता'' इति उक्तवान् भटनायकः।

'मया शिवसिंहेन सह जागरूकतया चातुर्येण च व्यवहारः करणीयः। कांस्यदुर्ग-गमनार्थं जनसाहाय्यम् अपेक्षितम् एव। तच्च

साहाय्यं शिवसिंहतः एव लभ्यते। एकाकिना गमनं तु आत्मघातुकं भवेत्। यतः मार्गे असङ्ख्याः अपायाः आपतन्ति एव। अतः एव किल तत्र गन्तुं कोऽपि उत्साहं न प्रकटयति ? यदि शिवसिंहं सत्यं वदामि तर्हि वृथा आपदम् स्वागतीकरोमि इव। यथा राजभटानां पुरतः अभिनयः कृतः तथैव शिवसिंहस्य पुरतः अपि मान्त्रिकेण इव व्यवहारः करणीयः। नूतनः वञ्चनामार्गः अन्वेष्टव्यः।'

एवं यदा चन्द्रवर्मा चिन्तयन् आसीत् तदा भटनायकः- ''महोदय ! महाराजसमीपं गच्छाम वा ?'' इति पृच्छन् अश्वं चन्द्रवर्मणः समीपम् आनीतवान्। चन्द्रवर्मा अङ्गीकारं प्रदर्शयन् अश्वस्य खलीनं हस्तेन स्वीकृत्य अश्वम् आरूढवान्।

तौ द्वौ इतरभटानां समीपम् आगतवन्तौ। तदनन्तरं ते सर्वे पर्वतान् अतिक्रम्य खातमार्गम् अनुसृत्य घण्टाद्वयानन्तरं रुद्रपुरं प्राप्तवन्तः।

रुद्रपुरस्य मुख्यद्वारं मार्गाश्च तोरणैः विशेषतया अलङ्कृताः आसन्। राजमार्गस्य उभयपार्श्वे अपि नगरवासिनः पङ्क्तिशः स्थिताः आसन्। यदा चन्द्रवर्मा राजभटैः सह राजमार्गं प्रविष्टवान् तदा ''महामन्त्रिकः जयतात्'' इति जयघोषध्वनिः सर्वत्र श्रुतः।

एतत् श्रुतवतः चन्द्रवर्मणः आश्चर्यम्- ''अहं कदा वा महामान्त्रिकः संवृत्तः ?'' इति।

'पूर्वं दक्षिणकरतलं दृष्ट्वा मया शिसिंहविषये वार्तालापः कृतः आसीत्। तेन एषः भटनायकः विशेषतया प्रभावितः। अतः एव राजानम् उद्दिश्य 'महामान्त्रिकः आगमिष्यति' इति वार्ता प्रेषितवान्। सामोपायेन मां वशीकर्तुम् इच्छन् शिवसिंहः मम स्वागतार्थं विशेषव्यवस्थां कृतवान् अस्ति। मया अपि एतदनुगुणं व्यवहारः करणीयः। शिवसिंहः यथा व्यामुग्धः भवेत् तथा कृत्वा उपायेन तदीयशक्तेः पूर्णः उपयोगः स्वीकरणीयः।' एवं चन्द्रवर्मणः मनसि आलोचनातरङ्गाः सञ्चरन्तः आसन्। (अनुवर्तते)






# स्वप्नस्य साकारता

'कार्यं वा साधयेयं, देहं वा पातयेयम्' इति निश्चयं कृतवान् इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य लम्बमानं शवं स्कन्धे आरोप्य वृक्षतः अवतीर्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितः च। तदा शवान्तर्गतः वेतालः अवदत्- "राजन्! भयङ्करे अस्मिन् रात्रिकाले क्रियमाणं भवतः कार्यं दृष्ट्वा निश्चयेन वक्तुं शक्यते यत् भवान् अप्रतिमः शूरः इति। किन्तु केवलं शौर्यातिशयेन कार्यं न सिध्यति। विचक्षणं ज्ञानं, कार्याकार्यविवेकः, कालोचितनिर्णयक्षमता च यदि न स्यात् तर्हि परिश्रमेण साधितं सर्वं व्यर्थं भवेत्। अत्र विशाखस्य कथा एव प्रमाणम्। 'कोऽयं विशाखः ?' इति भावना मनसि उत्पन्ना किल ? तर्हि सश्रद्धं शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा-

# वेतालकथा



पूर्वं पाटलीपुत्रे जयनन्दनः नाम धनिकः वणिक् आसीत्। तस्य गृहे विशाखः नाम तदीयदूरबन्धुः आसीत्। विशाखस्य पूर्वजाः अपि धनिकाः आसन्। किन्तु दौर्भाग्यवशात् सर्वं नष्टम्। अतः इदानीं विशाखः जयनन्दनस्य गृहे सेवकवृत्तिं करोति।

विशाखः रूपेण मन्मथः। सुदृढः आकारः, क्रियाशीला प्रवृत्तिः। गुणाः अपि उत्तमाः एव। किन्तु किं वा कर्तुं शक्यते- दैवम् एकं विपरीतम्!

विशाखः सर्वदा चिन्तयति- 'अहं कदा वा जयनन्दनसदृशः भवेयम्? केन उपायेन धनं सम्पादयितुं शक्येत?' इति। एतन्निमित्तं सः विविधमार्गान् चिन्तयन् सर्वदा दिवास्वप्नं पश्यन् कालं यापयति स्म।

एकदा मध्याह्नसमये विश्रान्तिम् अनुभवन् विशाखः एकत्र उपविष्टः आसीत्। श्रान्तिवशात् नेत्रद्वयं निमीलितम् अभवत्। तन्द्रावस्थायां तेन एकः स्वप्नः दृष्टः। स्वप्ने सः जयनन्दनस्य अपेक्षया अपि महाधनिकः अस्ति। जयनन्दनः तु इदानीं धनेन हीनः सन् एतस्य गृहे सेवकवृत्तिम् आश्रित्य तिष्ठति। एकस्मिन् दिने महता विलम्बेन अपि कार्यार्थं यदा जयनन्दनः न आगतः तदा कुपितः एषः उच्चैः आह्वयति- 'अये जयनन्दन! किं मृतः भवान्? आगच्छतु रे' इति। एवं स्वप्नं पश्यन् विशाखः पूर्वोक्तं वाक्यं वस्तुतः उच्चरितवान्।

विशाखस्य दुरदृष्टवशात् जयनन्दनः तत्रैव आसीत्। सः विशाखस्य स्वप्नालापं श्रुत्वा कोपेन तं ताडयन् मार्गे पातितवान्।

एतत् दृष्ट्वा जयनन्दनस्य बान्धवाः उच्चैः हसितवन्तः। परिहासवचनानि उक्तवन्तः च। दासाः दास्यः अपि एतां घटनां पुनः पुनः स्मरन्तः हसितवन्तः। एतादृशं घोरम् अवमानं सोढुम् अशक्तः विशाखः तद्दिने एव नगरं त्यक्त्वा अरण्यं गतवान्।

कुत्र गन्तव्यम् इति निश्चयः तु न आसीत् किल विशाखस्य? अतः सः दिगन्तं पश्यन् गच्छन् आसीत्। तदा तेन तपोनिरतः



कश्चन मुनिः दृष्टः। तं दृष्ट्वा विशाखः विनयेन साष्टाङ्गनमस्कारं कृतवान्।

किञ्चित्कालानन्तरं ध्यानसमाधितः बहिः आगतः मुनिः शान्तस्वरेण पृष्टवान्- "पुत्र! किम् इच्छति भवान्?" इति।

विशाखः सन्तोषेण उत्थाय नगरे प्रवृत्तं सर्वं निवेद्य प्रार्थितवान्- "महात्मन्! जयनन्दनः यथा मम दासः भवेत् तथा वरेण अनुगृह्णातु" इति।

मुनिः स्वतपोबलेन धनिकस्य जयनन्दनस्य पूर्वापरं सर्वं ज्ञातवान्। अनन्तरं विशाखं बोधितवान् च- "पुत्र! जयनन्दनः परिश्रमेण कार्यं कुर्वन् एतावतीं सम्पत्तिं सम्पादितवान् अस्ति। भवान् तु परिश्रमेण विना महाधनिकः भवितुम् इच्छति। यथा निद्रावस्थायां स्वप्नाः सहजाः तथैव स्वप्ने दृष्टाः विषयाः अवास्तवाः इत्येतत् अपि सहजम् एव। अतः अवास्तवं स्वप्नं साकारीकर्तुं वृथा प्रयत्नः किमर्थम्? परिश्रमेण उन्नतिं प्राप्तुं मार्गं चिन्तयतु" इति।

मुनेः हितवचने अनासक्तिं प्रदर्शयन् विशाखः उक्तवान्- "महात्मन्! भवान् पूर्वं ज्ञातान् एव अंशान् पुनः बोधितवान्। अत्र किं नावीन्यम्? महिमशाली भवान् यदि मम स्वप्नानां साकारीकरणे मार्गं प्रदर्शयेत् तर्हि अहं सन्तुष्टः भवेयम्" इति।

तदा मुनिः मन्दहासपूर्वकं "एषः तु लघु-विषयः। यदि तद्विषये एव भवतः आग्रहः तर्हि उपायं सूचयामि- दृष्टाः स्वप्नाः साकाराः भवन्तु इति स्मरन् उपदिष्टं मन्त्रं षड्वारं मनसि जपतु। तेन भवतः स्वप्नः साकारः भविष्यति" इति उक्त्वा विशाखस्य कर्णे दिव्यमन्त्रम् उपदिष्टवान्।

सन्तुष्टः विशाखः ततः गन्तुम् उद्युक्तः। तदा मुनिः उक्तवान्- "भोः, क्षणं तिष्ठतु। एतस्य मन्त्रस्य उपयोगं त्रिवारं केवलं स्वीकर्तुम् अर्हति। अनन्तरं मन्त्रः फलं न ददाति। मन्त्रस्य लाभं सर्वे यथा प्राप्नुयुः तथा जाग-रूकतया भवतु" इति।

विशाखः यदा पाटलीपुत्रं प्राप्तवान् तदा

रात्रिकाल: आसीत्। अत: स: कस्याश्चित् धर्मशालाया: पुरत: शयनं कृत्वा मुनिना उपदिष्टस्य मन्त्रस्य विषये चिन्तयन् निद्रां प्राप्तवान्। निद्रायां तेन स्वप्न: दृष्ट: यत् धनिक: जयनन्दन: एतं स्वगृहं नीत्वा सत्कृत्य पुत्रीं परिणेतुं निवेदयन् अस्ति इति।

विशाख: चकित: सन् जागरूक: अभवत्। स: उपविश्य स्वप्नविषयं आद्यन्तं पुन: स्मृतवान्। 'किमर्थं वा मुने: मन्त्रस्य सामर्थ्यं न परीक्षणीयम्?' इति कुतूहल: उत्पन्न: तस्य मनसि। स: मुनिना उपदिष्टं मन्त्रं षड्वारं जप्त्वा 'स्वप्ने दृष्टं सत्यं भवतु' इति वदन् पुन: निद्रां कृतवान्। किञ्चित्-कालानन्तरं समीपत: एव मङ्गलवाद्यध्वनि: तेन श्रुत:। आश्चर्येण स: उत्थाय उपविष्टवान्।

जयनन्दन: परिवारेण मङ्गलवाद्येन च सह आगच्छन् आसीत्। किम् एतत् इति आश्चर्येण विशाख: पश्यन् एव अस्ति। तदा जयनन्दन: समीपम् आगत्य उक्तवान्- "विशाख! यत् प्रवृत्तं तत् गतम् एव। इदानीं भवान् मम गृहम् आगच्छतु। किञ्चित्-कालत: पूर्वं कुलदेवता स्वप्ने आगत्य 'भवान् अत्र अस्ति' इति सूचितवती। 'सकलोपचारै: भवत: सत्कार: करणीय:, भवते मम पुत्री दातव्या च इति तया कुलदेवतया आदिष्टम् अस्ति। अत: भवन्तं नेतुं मङ्गलवाद्येन सह आगतवान्। कृपया गृहम् आगच्छतु" इति।

विशाख: तत्क्षणे एतत् न अङ्गीकृतवान्।



'निर्धनस्य मम भवतः सम्बन्धः किमर्थम्' इति वैराग्यं प्रदर्शितवान्। अन्ते जयनन्दनस्य अत्याग्रहेण तेन सह तदीयं गृहं गतवान्। अनन्तरदिने एव जयनन्दनस्य पुत्रीं मालिनीं सवैभवं परिणीतवान् च।

अनन्यगतिकः विशाखः विवाहानन्तरम् इदानीं श्वशुरगृहे एव निवसति। पूर्वम् एषः अस्माकं गृहे सेवकः आसीत् इत्येतं विषयं विस्मर्तुम् अशक्ताः श्यालादयः एतं अगौरव-भावनया पश्यन्ति। दासाः दास्यः च विशाखेन अकस्मात् प्राप्तं सौभाग्यं दृष्ट्वा असूयां प्रकटयन्ति स्म।

एतत् सर्वं परिशील्य एकदा जयनन्दनः विशाखम् उक्तवान्- "विशाख! 'उत्तमाः आत्मना ख्याताः' इति वचनं भवान् श्रुतवान् किल? इदानीं तु जनाः भवन्तं जयनन्दनस्य जामाता इति वदन्ति। इतःपरं जनाः मां विशाखस्य श्वशुरः इति यथा वदेयुः तथा परिस्थितिः परिवर्तनीया। तदर्थम् अहं भवते यथेष्टं धनं ददामि। भवान् स्वतन्त्रतया वाणिज्यं कुर्वन् यथेष्टं धनं सम्पादयतु" इति। विशाखः एतत् अङ्गीकृतवान्।

एकदा विशाखः पत्नीं मालिनीम् उक्त-वान्- "भवत्याः पिता मां महाधनिकं कर्तुम् इच्छति। तदर्थम् अहोरात्रं चिन्तयति सः। तस्य इच्छापूर्त्यै मया किं करणीयम् इति अहं जानामि। यत् करणीयं तत् न कष्टकरं कार्यम्" इति।





सर्वे जानन्ति। श्रमं विना पित्रा एतावत् धनं सम्पादयितुं शक्यम् अभविष्यत् वा?'' इति।

तदा विशाखः मुनिना उपदिष्टस्य मन्त्रस्य विषयं पत्न्यै उक्तवान्। किन्तु सा मन्त्रशक्तौ विश्वासं न प्रकटीकृतवती। 'स्वप्नवृत्तान्तं समर्थयितुं किमपि जल्पति भवान्' इति परिहासपूर्वकम् उक्तवती सा।

मन्त्रशक्तिं प्रमाणीकर्तुं विशाखः 'स्वप्नः साकारः भवतु' इति वदन् षड्वारं मन्त्रजपं कृतवान्। एतेन तदीयं वाणिज्यं तथा प्रवृद्धं यत् मासत्रयाभ्यन्तरे एव सः कोट्यधीशेषु अन्यतमः अभवत्। इदानीं मन्त्रशक्तौ मालिन्याः विश्वासः उत्पन्नः।

''यदि भवान् महाधनिकः न भवेत् तर्हि अस्माकं कुलगौरवं नश्यति किल? अतः वयं सर्वे भवतः महाधनिकत्वम् इच्छामः'' इति उक्तवती मालिनी।

तद्दिने रात्रौ विशाखः स्वप्ने दृष्टवान् यत् तदीयम् ऐश्वर्यं दिने दिने वर्धमानम् अस्ति। मासत्रयाभ्यन्तरे सः पाटलीपुत्रे एव अद्वितीयः धनिकः अभवत् इति। निद्रानन्तरं विशाखः पत्न्यै स्वप्नवृत्तन्तं निवेदितवान्।

तदा मालनी निरुत्साहेन उक्तवती- ''स्वप्नः दृष्टः इति एतावान् सन्तोषः वा? स्वप्नदर्शनेन किं वा प्रयोजनम्? यदि धनं सम्पादनीयं तर्हि श्रमः करणीयः। मम पित्रा कियान् श्रमः अनुष्ठितः इति पाटलीपुत्रीयाः

मासत्रयाभ्यन्तरे विशाखस्य सम्पत्तिः अविचिन्तितया प्रवृद्धा किल? अतः तस्य प्रतिस्पर्धिनः असूयापराः जाताः। ते- ''विशाखः अन्याय्येन मार्गेण धनं सम्पादितवान् अस्ति। खाद्यवस्तुषु दुर्मिश्रणं कृत्वा वाणिज्यं करोति। करम् अदत्त्वा महाराजं वञ्चितवान् अपि'' इति विशाखस्य विषये वार्तां प्रसारितवन्तः।

एषा वार्ता महाराजेन अपि ज्ञाता। सः सत्यासत्यताम् अविचार्य 'विशाखः अक्रमेण धनं सम्पादितवान्' इति घोषितवान्। 'एतदर्थं दशगुणितः करः दातव्यः, अन्यथा कारागृहवासः अनुभोक्तव्यः' इति आज्ञां कृतवान् अपि।



विशाखः एतां वार्तां श्रुत्वा किङ्कर्तव्यतामूढः जातः। अत्रान्तरे एव तदीयश्वशुरः जयनन्दनः अपि दिवङ्गतः। इदानीं मार्गदर्शनार्थम् अपि कोऽपि नास्ति।

दण्डदानार्थं यः समयः दत्तः आसीत् तस्य अन्तिमं दिनम् आगतम्। 'किं करणीयम्' इति चिन्तायां मग्नः विशाखः तद्दिने रात्रौ एकं स्वप्नं दृष्टवान्। स्वप्ने-विशाखः सिंहासनम् आरूढवान् अस्ति। प्रतिस्पर्धिनः वणिजः ये आसन् ते सर्वे शूलम् आरोपिताः" इति तेन दृष्टम्।

विशाखः एतं स्वप्नविचारम् अपि पत्न्यै निवेदितवान्। तदा मालिनी हर्षं प्रकटयन्ती- "उचिते समये एषः स्वप्नः दृष्टः। यदि भवान् राजा भविष्यति, तर्हि कठिना समस्या सुलभतया परिहृता भविष्यति। अहम् अपि राज्ञी भविष्यामि। अतः एतत्क्षणे एव मन्त्रोच्चरणं करोतु" इति उक्तवती।

किन्तु विशाखः इतोऽपि चिन्तामग्नः एव अस्ति। अन्ते सः- "मया एतत्क्षणे एव मुनिः द्रष्टव्यः" इति पत्नीम् उक्त्वा तत्क्षणे एव अरण्यं प्रति प्रस्थितवान्।

मुनिं सष्टाङ्गं प्रणम्य प्रवृत्तं सर्वं निवेद्य विशाखः प्रार्थितवान्- "महात्मन्! यः वरः दत्तः तम् उपसंहरतु। इतःपरं मयि मन्त्रशक्तिः यथा न तिष्ठेत् तथा करोतु" इति।

मुनिः मन्दहासपूर्वकम् उक्तवान्- "एतावच्छीघ्रं भवति विवेकः उदितः भवेत् इति मया न चिन्तितम् आसीत्। अस्तु तावत्, मन्त्रशक्तिम् उपसंहरामि। भवान् निश्चिन्ततया गच्छतु शुभं भवतु" इति।

विशाखः गृहं प्रत्यागत्य भूमिम् आपणान् च विक्रीय महाराजेन आदिष्टं करं दण्डं च पूर्णतया दत्तवान्। अनन्तरं पत्न्या सह देशान्तरं गत्वा लघुवाणिज्यम् आरब्धवान्। यावत् सम्पादनं तावता एव तृप्तिम् अनुभवन् सः सन्तोषेण जीवनं यापितवान्।

वेतालः एवं कथां समाप्य अवदत्- "राजन्! विशाखः यदि तृतीयवारम् अपि मन्त्रजपं कृतवान् स्यात् तर्हि राजा अभविष्यत्।

किमर्थं सः एतस्य अवकाशस्य तिरस्कारं कृतवान् ? किं तस्य तावती बुद्धिः अपि नास्ति ? यदि एकवारं सिंहासने उपविशति तर्हि किं वा असाध्यम् ? सद्यःकालीनसमस्यायाः परिहारः किम्, आजीवनं सवैभवं जीवितुं शक्यम् अभविष्यत्। एतं सामान्यविषयं जानन् अपि किमर्थं सः राजपदवीं न अङ्गीकृतवान् ? एतस्य उत्तरं जानन् अपि भवान् यदि न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा त्रिविक्रमः उक्तवान्- ''विशाखः धनलुब्धः स्यात्, किन्तु सः न बुद्धिहीनः। यस्मिन् क्षेत्रे अनुभवः नास्ति तत्र अकस्मात् प्रवेशेन नूतनाः समस्याः उद्भवन्ति। 'मन्त्रबलेन या उच्चस्थितिः प्राप्यते सा न हिताय' इत्येतं विषयं बोधयितुम् एव मुनिः तादृशं वरं दत्तवान् आसीत्। प्रथमं तु योग्यताहीनः विशाखः मालिनीं परिणीय जयनन्दनस्य जामाता अभवत्। एतस्य परिणामः- श्यालादीनां दासदासीनां च उपहासप्राप्तिः। द्वितीयतया तु सः वाणिज्यस्य अपरिचितं क्षेत्रं प्रविश्य कोटिशः धनं सम्पादितवान्। अनुभवराहित्यात् बलवतां प्रतिस्पर्धिनां विरोधं सम्पादितवान्। राजदण्डनभीतिः अपि आपतिता। एतदनुभवद्वयेन विशाखः ज्ञातवान् यत् मुनिना दत्ता मन्त्रशक्तिः स्वप्नं साकारीकर्तुं शक्नोति। किन्तु तदनन्तरम् उद्भवन्तीनां समस्यानां परिहारे न उपकरोति इति। अतः एव सः तृतीयतया राजपदवीं प्राप्तुं न इष्टवान्। मन्त्रबलेन सिंहासनप्राप्तिः सुलभा। विरोधिनः वणिजः अपि कारागारे स्थापयितुं शक्यते। किन्तु अनन्तरम् ? सर्वथा अननुभवी कथं राज्यपालनं कुर्यात् ? कथं वा प्रजानां सहस्रशः समस्याः परिहरेत् ? एतत् सर्वं विचिन्त्य एव मन्त्रशक्तिम् उपसंहर्तुं प्रार्थितवान्'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः बेतालः अदृश्यः भूत्वा पुनरपि वृक्षस्य शाखाम् अवलम्बितवान्।






अस्माकं देवालयाः

# काशी

प्रपञ्चे अतिप्राचीननगरेषु अन्यतमा काशी । काशीपदस्य अर्थः- प्रकाशमानं स्थलम् इति, काशपुष्पैः व्याप्तः प्रदेशः इति वा । वरुणा असि - इत्यनयोः गङ्गायाः उपनद्योः मध्ये अस्तीत्यतः काश्याः वाराणसी इत्यपि नाम ।

प्राचीनकालात् अपि अत्रत्यः शिवालयः प्रसिद्धः । अतः एव एतत् नगरं पवित्रतमत्वेन गण्यते । सर्वप्रथमं शिवालयं कः निर्मितवान् इति न ज्ञायते । इतिहासः अपि एतद्विषये मौनम् आचरति ।





पूर्वं दिवोदासः नाम राजा काशीं पालयन् आसीत् । प्रजानां योगक्षेम-निर्वहणम् एव तस्य परमः धर्मः । एतादृशः सज्जनः सः शिवविषये विशेषश्रद्धां भक्तिं च प्रदर्शयितुं विस्मृतवान् । राजास्थाने स्थिताः ज्येष्ठाः अपि एतं विषयं न स्मारितवन्तः ।




दिवोदासस्य एतेन औदासीन्येन शिवः खिन्नः। सः मौनं ततः निर्गतवान्। यद्यपि एतेन नगरस्य हानिः न जाता, किन्तु नगरं शिवसान्निध्यरहितं जातम्। शिवस्य निर्गमनं केवलं शिवभक्ताः ज्ञातवन्तः, न इतरे। राजा तु यथापूर्वं प्रजाहितकार्येषु निरतः आसीन्।

केषाञ्चित् वर्षाणाम् अनन्तरं शिवस्य मनसि आशा उत्पन्ना यत् आत्मना विरहितं नगरं कथं स्यादिति द्रष्टव्यम् इति। अतः सः एतदर्थं स्वगणीयान् प्रेषितवान्। किन्तु रुद्रगणीयाः काशीनगरस्य सौन्दर्येण आकृष्टाः सन्तः गङ्गातीरे एव वसतिम् आरब्धवन्तः





एकदा विष्णुः ब्राह्मणवेषेण दिवोदासस्य समीपम् आगत्य- "मानवः केवलम् उत्तमः भवति चेत् न पर्याप्तम्। सः आध्यात्मरतः भक्तिमान् अपि भवेत्। अतः भवता शिवस्य आराधनं करणीयम्" इति विवेकं बोधितवान्।

राजा दिवोदासः स्वकीयम् आध्यात्मिककर्तव्यम् निर्वर्तयितुं सङ्कल्प्य सुविशालम् एकं देवालयं निर्माय तत्र शिवलिङ्गं प्रतिष्ठापितवान्। एतेन सन्तुष्टः शिवः पुनः काशीम् आगतवान्।







कालान्तरे प्राचीनः एषः देवालयः अदृश्यतां गतः। इदानीं यः देवालयः दृश्यते तं इन्दोरराज्ञी अहल्याबाई निर्मितवती। पञ्जाबराजः रणजित्सिङ्ग् एतस्य आलयस्य गोपुरं सुवर्णकवचेन अलङ्कृतवान्।

एतस्य ईश्वरस्य विश्वनाथः विश्वेश्वरः इत्यपि नामान्तरम्। एतस्य दर्शनार्थं देशस्य चतुर्भ्यः अपि कोणेभ्यः प्रतिदिनं भक्ताः आगच्छन्ति। प्रमुखेषु पर्वादिदिनेषु शिवस्य विशेषपूजा उत्सवादयः च सवैभवं प्रचलन्ति।





वाराणसीसमीपे गङ्गानद्यां स्नानं पुण्यदायकम् इति जनाः दृढं भावयन्ति। 'काशीमरणात् मुक्तिः' इत्यपि केषाञ्चित् दृढः विश्वासः। बहवः सुदूरतः आगत्य मृतानाम् अस्थीनि गङ्गानद्यां स्थापयन्ति। एतेन मृताः सद्गतिं प्राप्नुवन्ति इति तेषां विश्वासः।

पुराणकथासु बहुत्र काशीनगरस्य उल्लेखः कृतः दृश्यते। हरिश्चन्द्रः यदा श्मशानपालकः आसीत् तदा तस्य पत्नी मृतं कुमारम् अत्र एव श्मशानम् आनीतवती इति श्रूयते।






बहोः कालतः असङ्ख्याः भक्ताः काशीनगरस्य सन्दर्शनं कुर्वन्तः सन्ति। गौतमबुद्धः, आदिशङ्करः, मध्वः, रामानुजः, कबीरः, नानकः, तुलसीदासः, चैतन्यप्रभुः इत्यादयः महापुरुषाः काशीं दृष्टवन्तः। सहस्रशः वर्षेभ्यः पुरातना अपि काशी इदानीम् अपि नित्यनूतनायते।



# वल्कलचीरः

पोतननामकस्य नगरस्य राजा सोमचन्द्रः। तस्य पत्नी धारिणीदेवी। तयोः प्रसन्नचन्द्र-नामकः एकः पुत्र आसीत्।

एकदा धारिणीदेवी सोमचन्द्रस्य केश-प्रसाधनं करोति स्म। तदा तस्य मस्तके एकः पलितः केशः दृष्टः। तं दृष्ट्वा धारिणी किञ्चित् हसन्ती "भवतः वार्धक्यं सन्निहितम्" इति उक्तवती।

"अहो ! इतःपरं राज्यभोगः अनुचितः। इदानीम् एव कालविलम्बः जातः। अतः अहं वनं गत्वा तपः आचरन् मुनिजनानां मध्ये निवसामि" इति उक्तवान् राजा सोमचन्द्रः।

पतिं विना जीवनं यापयितुम् अनिच्छन्ती धारिणी "भवता सह अहम् अपि अरण्यं आगमिष्यामि" इति उक्तवती।

सोमचन्द्रः स्वपुत्राय प्रसन्नचन्द्राय राज्यं समर्प्य पत्न्या सह अरण्यं गतवान्। तत्र एकस्मिन् सुयोग्यस्थाने कुटीरं निर्माय तपः आचरन् तया सह तत्र वसति स्म। किञ्चित्-कालानन्तरं धारिणीदेवी एकं पुत्रं प्रसूतवती। सः पुत्रः वल्कलचीरः इति नाम प्राप्तवान्।

अनन्तरं धारिणी बहुकालं यावत् न जीवितवती। तस्याः मरणानन्तरं शिशुं वल्कलचीरं सोमचन्द्रः स्वयम् एव क्षीरादिकं पाययन् पालितवान्। एवंरीत्या जनकेन पालितस्य वल्कलचीरस्य मुनिजनान् विना अन्यस्य कस्य अपि दर्शनम् अपि न अभवत्। एवमेव सः वर्धते स्म।

वल्कलचीरस्य जननवार्ता, तदनन्तरविचारान् च पोतननगरे स्थितः राजा प्रसन्नचन्द्रः ज्ञातवान्। सः स्वीयम् अनुजं येन केनापि उपायेन आनाययितुं निश्चयं कृतवान्।

तदर्थं प्रसन्नचन्द्रः काश्चन सुन्दरीः नर्तकीः नियोजितवान्। ताः मुनिजनयोग्यानि



वस्त्राणि धृतवत्यः। फलानि मधुरखाद्यानि च स्वीकृत्य अरण्यं गतवत्यः च।

वल्कलचीरः आश्रमे यदा एकाकी आसीत् तदा नर्तक्यः तस्य समीपं गतवत्यः। राजधानीतः आनीतानि फलानि खाद्यानि च तस्मै दत्तवत्यः। तादृशखाद्यवस्तूनि सः पूर्वं कदापि न दृष्टवान् आसीत्। ताः सर्वाः नर्तक्यः मुनिजनाः एव इति तस्य भावना।

ताः नर्तक्यः तम् उद्दिश्य "अस्माकम् आश्रमः समीपे एव पोतननामकस्थाने अस्ति। अस्माकम् आश्रमः बहुमनोहरः अस्ति। बहूनि सुखसाधनानि तत्र सन्ति। यदि भवान् तत्र आगच्छति, तर्हि प्रतिदिनम् एतादृशमधुराणि खादितुं शक्नोति" इति उक्तवत्यः।

तासां तानि वचनानि श्रुत्वा पोतनाश्रमं द्रष्टुं वल्कलचीरस्य तीव्रा अपेक्षा सञ्जाता। किन्तु अत्रान्तरे सोमचन्द्रस्य आगमनसूचनां दृष्ट्वा ताः नर्तक्यः ततः अरण्यं प्रति धावितवत्यः। किञ्चित्कालानन्तरं वल्कलचीरः तासाम् अन्वेषणं कुर्वन् तस्याम् एव दिशि किञ्चिद्दूरं गतवान्। मार्गमध्ये एकः शकटः दृष्टः। वल्कलचीरः शकटचालकं दृष्ट्वा "भोः मुनीन्द्र, पोतनाश्रमः कुत्र अस्ति? तत्र गन्तुं कृपया मार्गं दर्शयतु" इति पृष्टवान्।

तस्य वचनं श्रुत्वा शकटे उपस्थिता शकटचालकस्य पत्नी हसितवती।

"पोतनाश्रमं गन्तुम् इच्छति चेत्, मम शकटे उपविशतु। अहं तत्रैव गच्छन् अस्मि" इति उक्तवान् शकटचालकः।

वल्कलचीरः शकटम् आरुह्य उपविष्टवान्। तथा मार्गक्रमणसमये पुनः पुनः "सः ऋषिः कः? एतस्मिन् कुटीरे कः मुनिः वसति? तत्र दृश्यमानस्य आश्रमस्य नाम किम्?" इति मुग्धभावेन शकटचालकं पृष्टवान्। तस्य एतादृशम् अज्ञानं मुग्धतां च दृष्ट्वा शकटचालकः तस्य पत्नी च हसितवन्तौ।

एवंरीत्या गमनसमये कश्चित् चोरः शकटस्य उपरि आक्रमणं कृतवान्। तदा शकटचालकः दण्डम् उन्नीय चोरस्य मस्तकं ताडितवान्। चोरः अचेतनः भूत्वा तत्रैव

पतितवान्। शकटचालकः चोरस्य समीपे स्थितानि समस्तवस्तूनि गृहीत्वा, शकटे संस्थाप्य, पोतननगरं प्रति प्रस्थितवान्।

यदा ते पोतननगरं प्राप्तवन्तः, तदा शकटचालकः वल्कलचीरं "भोः बाल! एषः एव पोतनाश्रमः। एतस्मिन् आश्रमे यत् किमपि लब्धुम् एतत् अत्यावश्यकम्। अतः एतत् स्वीकरोतु" इति उक्त्वा, किञ्चित् धनं दत्त्वा स्वीयकार्यार्थं ततः निर्गतवान्।

तत् नगरं दृष्ट्वा वल्कलचीरः आश्चर्यचकितः अभवत्। एतादृशः प्रदेशः कश्चन स्यात् इति तस्य कल्पना अपि न आसीत्। मार्गे यं यं पश्यति तं तं "नमो नमः महामुने" इति वदन्, अनेकेषु मार्गेषु अटन् अन्ते राजनर्तक्याः गृहं प्रविष्टवान्।

वल्कलचीरः राजनर्तकीं दृष्ट्वा "भोः आर्ये! मदर्थम् एकं कुटीरं दापयतु भोः" इति उक्त्वा शकटचालकेन दत्तं सर्वं धनं तस्याः हस्ते दत्तवान्।

सा तु "तथास्तु भोः" इति उक्त्वा, वल्कलचीरं गृहस्य अन्तः नीत्वा, तैललेपनपूर्वकं सम्यक् स्नानं, सुगन्धचन्दनादिलेपनं, नूतनवस्त्राधारणं च कारितवती। अनन्तरं स्वीयपुत्र्या सह तस्य विवाहं विधिपूर्वकं कारयितुम् सा उद्युक्तवती। वल्कलचीरः कस्य अपि किमपि विरोधम् अकुर्वन् तूष्णीं स्थितवान्।




विवाहसम्बन्धिगीतानि श्रुत्वा तस्य सन्तोषः जातः। किन्तु वाद्यादीनां स्वरान् श्रुत्वा आश्चर्यं तथा किञ्चित् भयम् अपि अनुभूतवान्।

अत्रान्तरे नर्तक्यः प्रसन्नचन्द्रस्य समीपं गत्वा अरण्ये जातं सर्वं वृत्तान्तं कथितवत्यः। ताभिः सह स्वीयः अनुजः न आगतवान् इति ज्ञात्वा क्रुद्धः प्रसन्नचन्द्रः उच्चैः आक्रोशं कृतवान्। एतस्मिन् एव समये राजनर्तक्याः गृहतः मङ्गलवाद्यानां स्वरान् श्रुत्वा तस्य क्रोधः पूर्वापेक्षया अधिकः जातः।

सः राजभटानां द्वारा राजनर्तकीगृहतः स्वीयम् अनुजं स्वप्रासादम् आनाय्य राजभवने सुरक्षितरूपेण स्थापितवान्। अनन्तरं

सः वल्कलचीराय क्रमशः राज्यशासनस्य परिचयं कारितवान् । उत्तमां राजकुमारीम् अन्विश्य तस्य विवाहं कारितवान् ।

एवंरीत्या वल्कलचीरः अग्रजस्य प्रयत्नेन यथाक्रमं नागरिकव्यवहारं ज्ञातवान् । कानिचन दिनानि अतीतानि । अनन्तरम् एकदा राजभटाः शकटचालकस्य उपरि चौर्यम् आरोप्य तं बद्ध्वा आनीतवन्तः । यतः चोरतः लब्धानि वस्तूनि शकटचालकः नगरे विक्रीतवान् । तानि वस्तूनि तस्मिन् नगरे एव पूर्वं चोरितानि आसन् । इदानीं पुनः स्वीयवस्तूनि दृष्ट्वा नागरिकाः शकटचालकस्य उपरि चौर्यम् आरोपितवन्तः । यदा राजभटाः शकटचालकं राजास्थानम् आनीतवन्तः तदा वल्कलचीरः अग्रजस्य समीपे उपविष्टः आसीत् । सः शकटचालकं दृष्ट्वा पूर्वं जातं वृत्तान्तं कथयित्वा तं बन्धविमुक्तं कारितवान् ।

वल्कलचीरः द्वादशवर्षाणि यावत् सन्तोषेण कालं यापितवान् । अनन्तरं सः अकस्मात् जनकं स्मृतवान् । तत्र अरण्ये वृद्धः सोमचन्द्रः स्वीयं पुत्रं स्मारं स्मारं, दुःखेन सर्वदा रोदनं कुर्वन् अन्धः जातः आसीत् । अन्ये मुनिजनाः तस्य योगक्षेमं पश्यन्तः आसन् । ते मुनयः अन्वेषणप्रयत्नान् कृत्वा, वल्कलचीरस्य विचारं ज्ञात्वा "भवान् चिन्तां न करोतु । वल्कलचीरः अग्रजसमीपं गत्वा सुखं जीवन् अस्ति" इति सोमचन्द्रं समाश्वासितवन्तः ।

जनकस्य स्मरणं प्राप्य वल्कलचीरः महता पश्चत्तापेन जनकं द्रष्टुं प्रस्थितवान् । तेन सह प्रसन्नचन्द्रः अपि प्रस्थितः । अरण्यं प्रविश्य अग्रजेन सह आश्रमं प्रति गच्छन् वल्कलचीरः पूर्वपरिचितानि स्थानानि प्रदर्शयन् गतवान् । अत्रान्तरे सोमचन्द्रः स्वीयपुत्रस्य आगमनवार्तां श्रुतवान् । तस्य नेत्राभ्यां धाराकाररूपेण अश्रूणि निर्गतानि । तेन पूर्वं नष्टां दृष्टिशक्तिं सः इदानीं पुनः प्राप्तवान् । एतत् विचित्रं दृष्ट्वा तत्र उपस्थिताः सर्वे मुनयः आश्चर्यचकिताः अभवन् ।








रुद्रगण-दानवगणयोः मध्ये सुदीर्घं युद्धं प्रवृत्तम्। किन्तु एतेन दानवसेनायां काऽपि सङ्ख्यान्यूनता न दृष्टा। एतत् कथं सम्भवति इति शिवः न ज्ञातवान्। तदा सः विष्णुं स्मृतवान्। प्रत्यक्षं विष्णुं शिवः पृष्टवान्-"महाविष्णो! एतावता सुदीर्घेण युद्धेन अपि शङ्खचूडस्य सेनायां सङ्ख्या न्यूना न जाता। अत्र किं कारणं स्यात्?" इति।

तदा विष्णुः उक्तवान्- "शङ्खचूडस्य पत्न्याः तुलस्याः पातिव्रत्यं तां सेनां रक्षति। एतन्निवारणार्थम् एकः एव उपायः- तुलस्याः पातिव्रत्यभङ्गः। तत् अहं करोमि। भवान् शङ्खचूडस्य संहारं करोतु" इति।

अनन्तरं विष्णुः शङ्खचूडस्य वेषं धृत्वा तुलसीसमीपं गतवान्। ताम् उक्तवान् च- "तुलसि! अहं शिवेन सह युद्धं कुर्वन् अस्मि। जयापजयं न ज्ञातम्। भवत्याः स्मरणेन खिन्नः अहं भवतीं द्रष्टुम् आगतवान्" इति।

तुलसी तस्य वचनेषु विश्वसितवती। सन्तोषेण तं कपटशङ्खचूडं विविधोपचारैः सत्कृतवती। एतेन तस्याः पातिव्रत्यं नष्टम् अभवत्। यदा तुलसी पातिव्रत्यतः च्युता अभवत् तदा शङ्खचूडस्य सेनायाम् उत्पातः उत्पन्नः। शिवः सुलभतया शङ्खचूडं स्वत्रिशूलेन मारितवान्।

यद्दिने शङ्खचूडः मृतः तद्दिने रात्रौ तुलसी स्वपार्श्वे सुप्तस्य विष्णोः निजस्वरूपं दृष्टवती।

१२. नन्दीश्वरादीनां कथा।



निद्रामग्नस्य विष्णोः मायारूपम् अपगतम् आसीत्। एवं मायारूपेण आगत्य वञ्चितवन्तं विष्णुं दृष्ट्वा कुपिता तुलसी 'भवान् शिलारूपतां प्राप्नोतु' इति शप्तवती।

विष्णुं स्वकीयम् अपराधं सविनयम् अङ्गीकृत्य उक्तवान्- ''भवती इतःपरं गण्डकी नाम नदी भविष्यति। तत्र अहं शालग्रामरूपेण शाश्वतिकतया निवसिष्यामि। सस्यविशेषः भवत्याः नाम्ना आचन्द्रार्कं पूज्यते'' इति। अनन्तरं सः तां गोलोकं नीतवान्। ततः गण्डकी नदी उद्भूता अभवत्।

**पूर्वं** सालङ्कायननामकस्य मुनेः शिलादः नाम पुत्रः आसीत्। शिलादस्य सन्तानं न आसीत्। अतः सः कैलासं गत्वा पार्वतीपरमेश्वरौ उद्दिश्य घोरं तपः तप्तुम् आरब्धवान्। तस्य तपसा तुष्टौ पार्वतीपरमेश्वरौ तस्य पुरतः प्रत्यक्षौ जातौ। शिलादः स्वकीयम् अभिलाषं निवेदितवान्। तदा पार्वतीपरमेश्वरौ- ''भवान् सन्तानं न प्राप्नोति। किन्तु एकं पुत्रं तु प्राप्नोति'' इति उक्त्वा अदृश्यतां गतवन्तौ।

शिलादः आश्रमं प्रत्यागतवान्। बहोः कालात् अनन्तरम् अपि तेन पुत्रः न प्राप्तः। अतः सः एकं विशेषयागं कर्तुं निश्चितवान्।

शास्त्ररीत्या यदा यज्ञकुण्डार्थं भूमेः खननम् आरब्धम् तदा ततः कश्चन सुन्दरः बालकः उत्थितवान्। सन्तुष्टः शिलादः तस्य नाम नन्दः इति निश्चितवान्।

एकदा मित्रावरुणौ शिलादस्य आश्रमम् आगतवन्तौ। नन्दं दृष्ट्वा 'एषः अल्पायुः' इति उक्तवन्तौ च। एतत् अप्रियं सत्यं श्रुत्वा शिलादः चिन्ताग्रस्तः अभवत्।

नन्दः अनुरोधपूर्वकं पितुः चिन्ताकारणं पृष्टवान्। अन्ते तत् ज्ञात्वा केदारपर्वतं गत्वा पार्वतीपरमेश्वरौ ध्यायन् तपः आरब्धवान्। तेन पार्वतीपरमेश्वरौ प्रत्यक्षीभूय ''यत् इच्छति तत् पृच्छतु'' इति उक्तवन्तौ।

''अहं दीर्घायुष्यान् यथा स्यां, भवतोः सेवां निरन्तरं कुर्वन् लोकप्रसिद्धिं यथा प्राप्नुयां तथा वरेण अनुग्रहीतव्यः'' इति सः प्रार्थितवान्।



पार्वतीपरमेश्वरौ तस्य प्रार्थनाम् अङ्गीकृतवन्तौ। तस्य नाम नन्दीश्वरः इति निश्चित्य तस्मै गणाधिपत्यं दत्तवन्तौ। शिवः नन्दीश्वरं गणाधिपत्यस्थाने अभिषेक्तुं स्वजटायां स्थितां गङ्गाम् उपयुक्तवान्। अभिषिक्तेन जलेन पञ्च नद्यः उत्पन्नाः। ताः च - त्रिस्रोता, जटोदरा, स्वर्णोदका, जम्बूः, वृषभध्वजा च।

एवम् अभिषिक्तं नन्दीश्वरं पार्वतीपरमेश्वरौ आत्मना सह कैलासं नीतवन्तौ। अनन्तरं नन्दीश्वरः मरुद्देवताकुमारीं सुकीर्तिं परिणीतवान्। नन्दीश्वरस्य कुलबान्धवाः सर्वे शिवस्य आज्ञानुसारं रुद्रगणं प्रविष्टवन्तः।

**महासृष्टेः** आदौ त्रिमूर्तयः उत्पन्नाः। तदा पञ्चमुखी ब्रह्मा शिवं विष्णुं च दृष्ट्वा "अहं भवतोः अपेक्षया श्रेष्ठः परब्रह्मस्वरूपी। अतः मम पूजा करणीया" इति उक्तवान्।

एतेन कुपितः शिवः रौद्राकारतां प्राप्य हुङ्कारं कृतवान्। तदा भयङ्कराकारः, त्रिणेत्रः श्वेतशरीरः, त्रिशूलादि-आयुधधारी कश्चन आकारः उत्पन्नः। उत्पत्तिसमनन्तरम् एव सः डमरुकनादेन दशदिक्षु प्रतिध्वनिम् उत्पादयन् कर्णकठोरस्वरेण पृष्टवान्· "परमेश्वर! मां किमर्थम् उत्पादितवान्? मया इदानीं किं करणीयम्?" इति।

"तं ब्रह्माणं दण्डयतु" इति सूचितवान् जगदीश्वरः। तदा सः राक्षसाकारकः ब्रह्मणः समीपं गत्वा पञ्चसु मध्ये स्थितं मुखं कनिष्ठिकायाः नखाग्रेण छित्त्वा क्षिप्तवान्। तदेव शिरः ब्रह्मकपालनाम्ना प्रसिद्धम् अभवत्। तत् स्थलं च काशीनाम्ना प्रसिद्धम्।

एवं ब्रह्मणः दण्डनार्थम् सृष्टं राक्षसाकारकं पुरुषं शिवः कालभैरवनाम्ना आहूतवान्। तं स्व अङ्गरक्षणकार्ये नियोजितवान् च।

किन्तु ब्रह्महत्यापापं भयङ्कररूपतां प्राप्य कालभैरवस्य अनुसरणम् अकरोत्। तदा शिवः कालभैरवम् उक्तवान्- "भोः कालभैरव! ब्रह्महत्यापापनिवारणार्थं भवान् तीर्थयात्रां करोतु। काशीक्षेत्रे भवान् ब्रह्महत्यापापतः विमुक्तः भविष्यति" इति।

एतदनुगुणं कालभैरवः बहुकालपर्यन्तं



पञ्चवर्षीयः उपमन्युः एकदा मातरं पृष्टवान्- "अम्ब ! मह्यं क्षीरम् आवश्यकम्" इति।

"पुत्र ! कुतः क्षीरम् आनयेयम् ? वयं निर्धनाः। भवतः मातुलाः तु धनिकाः। अतः तत्र क्षीरनवनीतादीनि यथेष्टं लभ्यन्ते स्म। अत्र तादृशं किम् अस्ति ? अहं किं वा करोमि ?" इति पुत्रम् उक्तवती विमला।

तथापि पुत्रः रोदनं न स्थगितवान्। तदा विमला जले श्वेतपिष्टं योजयित्वा दत्तवती। उपमन्युः तत् निराकुर्वन् पुनः अपि उच्चैः रुदितवान्।

"वयं निर्धनाः। क्षीरादीनां प्राप्तिः अशक्या एव इति यावत् वदामि चेदपि न शृणोति किल भोः" इति कोपमिश्रितस्वरेण उक्तवती विमला।

"अस्माकं दारिद्र्यस्य निवारणं कथम् ?" इति पृष्टवान् उपमन्युः।

विमला स्वपुत्रं व्याघ्रपादसमीपं नीत्वा प्रवृत्तं सर्वं निवेदितवती। तदा व्याघ्रपादः उपमन्यवे शिवपञ्चाक्षरीमन्त्रम् उपदिश्य- "भवान् कैलासपर्वतं गत्वा एतं मन्त्रं श्रद्धया जपतु। तदा पार्वतीसमेतः परमेश्वरः प्रत्यक्षी-भविष्यति" इति उक्तवान्।

उपमन्युः कैलासपर्वतं गत्वा शिवपञ्चाक्षरी-मन्त्रं जपन् उपविष्टवान्।

शिवः विकाररूपेण उपमन्युसमीपम् आगत्य

तीर्थयात्रां कुर्वन् अन्ते काशीं प्राप्तवान्। काश्यां गङ्गास्नानेन पापविमुक्तः सन् तत्रैव प्रतिष्ठितः अभवत्। काशीनगरस्य क्षेत्रपाल-कत्वेन जनाः तं पूजयितुम् आरब्धवन्तः।

पूर्वं व्याघ्रपादः नाम मुनिः आसीत्। तस्य पत्न्याः नाम विमला। तौ उभौ अपि श्रेष्ठौ शिवभक्तौ। निरन्तरशिवाराधनेन तौ एकं पुत्रं प्राप्तवन्तौ। तस्य पुत्रस्य नाम उपमन्युः इति निश्चितम् अभवत्।

विमलायाः मातृगृहम् आर्थिकतया समृद्धम्। तस्याः मातापितरौ एतां उपमन्युं च आत्मना सह नीतवन्तौ। किञ्चित्-कालं यावत् सम्यक् उपचर्य तौ व्याघ्रपादसमीपं प्रेषितवन्तौ।

"किं भोः बालक ! इदम् क्रूरप्राणिनाम् वासस्थानम्। किमर्थम् अत्र एवम् उपविष्टवान् ? गृहं गच्छतु" इति उक्तवान्।

"मया किं करणीयम् इति अहं भवन्तं न पृष्टवान्। विना कारणं सम्भाषणं न करोतु, गच्छतु। मम पार्वतीपरमेश्वरयोः रक्षणम् अस्ति" इति उक्त्वा उपमन्युः नेत्रे निमील्य पुनः जपम् आरब्धवान्। तत्समनन्तरम् एव व्याघ्रस्य गर्जनं श्रुतम्। आक्रमणार्थं सिद्धस्य व्याघ्रस्य गर्जनं तत्। तत् श्रुत्वा अपि उपमन्युः अविचलः सन् ध्याने लीनः आसीत्।

बालस्य उपमन्योः धैर्यसाहसं दृष्ट्वा सन्तुष्टौ पार्वतीपरमेश्वरौ उपमन्योः पुरतः स्थितवन्तौ। तम् उत्थाप्य "आवश्यकं वरं पृच्छतु" इति उक्तवन्तौ च।

"शिवः पार्थिवलिङ्गरूपेण मम दैनन्दिनपूजां स्वीकरोतु। अष्टैश्वर्यम् अपि मह्यं सिध्यतु" इति प्रार्थितवान् उपमन्युः।

पार्वतीपरमेश्वरौ 'तथास्तु' इति उक्त्वा अदृश्यतां गतवन्तौ। तृप्तः उपमन्युः ततः प्रस्थाय गृहं प्रत्यागतवान्। पुनः तस्य जीवने कापि समस्या न आगता।

आदिकाले देवाः दानवाः च यदा निरन्तरं युद्धं कुर्वन्ति स्म, तदा देवाः एव अधिकतया मरणं प्राप्नुवन्ति स्म। तदा देवाः मेरुपर्वतं गत्वा विष्णुं दृष्ट्वा 'अस्माकं चिरञ्जीवित्वं आवश्यकम्' इति प्रार्थितवन्तः।

"तथा चेत् भवन्तः दानवाः च मिलित्वा क्षीरसागरे ओषधिरसं निक्षिप्य मन्दरपर्वतं मन्थानमिव परिकल्प्य मन्थनं कुर्वन्तु। तदा अमृतं लभ्यते। तेन भवन्तः चिरञ्जीवित्वं प्राप्नुवन्ति" इति विष्णुः उक्तवान्।

देवाः गत्वा मन्दरपर्वतम् उत्पाटयितुं प्रयत्नं कृतवन्तः। बहुधा प्रयत्नः कृतः चेदपि मन्दरपर्वतः किञ्चिदपि न विचलितः। तदा देवाः पुनः मेरुपर्वतं गत्वा "मन्दरपर्वतं उत्पाटयितुं वयं न शक्तवन्तः" इति विष्णुं निवेदितवन्तः।





# वञ्चितः चोरः

एकदा चत्वारः ग्रामीणाः वाणिज्यार्थं स्वग्रामतः बाग्दादनगरं गतवन्तः। तत्र एकस्यां धर्मशालायां स्ववस्तूनि स्थापितवन्तः। अनन्तरं ते सर्वे विपणिं प्रति प्रस्थितवन्तः।

आरम्भतः तेषां गमनागमनं व्यवहारान् च एकः चोरः पश्यन् आसीत्। सः तेषां प्रकोष्ठे स्थापितानि वस्त्राणि चोरितवान्।

सः चोरः तानि वस्त्राणि, पूर्वं चोरितानि अन्यवस्त्राणि च साप्ताहिकवाणिज्यस्थानं नीत्वा, विक्रेतुं प्रयतितवान्। किन्तु पुरातनानि तानि वस्त्राणि न कोऽपि क्रीतवान्। यः कोऽपि मूर्खः एतानि वस्त्राणि क्रीणीयात् इति आशया तत्रैव उपविष्टवान् चोरः। वस्त्राणि तस्य पार्श्वभागे आसन्।

तस्मिन् समये एकः मर्कटः तत्र तत्र धावन्, उत्प्लवनं कुर्वन् चोरस्य समीपम् आगतवान्। यदा चोरः मर्कटस्य क्रीडादिकं पश्यन् विनोदमग्नः आसीत्, तदा मर्कटस्य यजमानः विना शब्दम् आगत्य, चोरस्य पार्श्वे स्थितानि वस्त्राणि अपहृत्य शनैः ततः निर्गतवान्।

किञ्चित्कालानन्तरं प्रथमः चोरः स्वीय-वस्त्राणि अपहृतानि इति ज्ञात्वा "चोरः! चोरः!" इति उच्चैः आक्रोशं कृतवान्। तं परितः केचन जनाः आगत्य अन्विष्टवन्तः। किन्तु द्वितीयचोरः कुत्रापि न दृष्टः।

परेद्युः नगरस्य अन्यस्मिन् भागे एकत्र प्रथमः चोरः एकं वस्त्रवणिजं दृष्टवान्। तस्य पुरतः वस्त्राणां पेटिकाः आसन्। वस्त्राणां वणिक् उच्चस्वरेण "भो भोः जनाः! पश्यन्तु! अदृष्टहीनः अहम्। एतत् वस्त्रवाणिज्यं मम अनुकूलकरं नास्ति। अतः मम सर्वेषां वस्त्राणां विक्रयणम् अत्यन्तन्यूनमूल्येन कुर्वन् अस्मि। एतादृशः अवकाशः सर्वथा दुर्लभः।

"अरेबिया कथा"

आगच्छन्तु, क्रीणन्तु'' इति वदन् आसीत्।

तेषां वस्त्राणां मूल्यं निश्चयेन अत्यल्पम् अस्ति इति प्रथमचोरस्य विश्वासः अभवत्। सः एकां पेटिकां गृहीत्वा, तस्याः बन्धनसूत्रं उद्घाटयितुम् उद्युक्तवान्। तदा सः वणिक् क्रोधेन ''प्रथमं धनं ददातु, अनन्तरं पेटिकां स्पृशतु। मयि अविश्वासः वा?'' इति उक्तवान्।

''एतस्य वचनानि यथार्थानि सन्ति। एतानि वस्त्राणि क्रीत्वा अन्यत्र विक्रयणं करोमि चेत् विशेषलाभं प्राप्नोमि'' इति तर्कयन् सः धनं दत्त्वा ताः सर्वाः पेटिकाः क्रीतवान्। वणिक् तु धनं स्वीकृत्य झटिति ततः निर्गतवान्।

प्रथमः चोरः एकस्याः पेटिकायाः सूत्रम् उन्मोच्य अन्तः दृष्टवान्। अहो आश्चर्यम्! गतदिने यानि वस्त्राणि आत्मना धर्मशालायाम् अपहृतानि, तानि एव पेटिकायाम् सन्ति। अवशिष्टासु पेटिकासु अपि प्राचीनवस्त्राणि एव! सः वस्त्रवणिक् अपि कश्चन चोरः। 'अनुपयुक्तानि वस्त्राणि सुन्दरपेटिकासु संस्थाप्य मां वञ्चितवान्' इति प्रथमः चोरः ज्ञातवान्।

''यदा अहं वस्त्राणि अपहृतवान् तदा यः कोऽपि पश्येत् इति भीतः आसम्। यदा तानि वस्त्राणि अन्यः अपहृतवान्, तदा प्राणाः एव गच्छन्ति वा इति दुःखम् अभवत्। इदानीं तु पुनः धनं दत्त्वा तानि क्रीतवान् अस्मि। कथम् अहम् एवं रीत्या वञ्चितः? धिक् धिक्! ग्रामीणानां शापवचनानि एव एतेषाम् अनर्थानां कारणम् स्यात्। इतःपरम् अपि एतानि वस्त्राणि मम समीपे भवन्ति चेत्, अनर्थ-परम्परा एव आपतेत्'' इति चिन्तयन् भीतः अभवत् सः।

अतः सः सर्वाणि वस्त्राणि ग्रन्थिरूपेण बद्ध्वा, सायम् अन्धकारसमये धर्मशालां गतवान्। तत्र ते चत्वारः ग्रामीणा सुप्ताः आसन्। चोरः तेषां पार्श्वे वस्त्रग्रन्थिं स्थापयित्वा, शीघ्रं ततः धावितवान्।



# दैवचिन्तनम्

श्रीनगरे कृष्णाचार्यः नाम पण्डितः आसीत्। सः प्रतिवर्षं नवरात्रसन्दर्भे विशेषोत्सवम् आयोजयति। तत्र भगवतः विषये उपन्यासं करोति च। कृष्णाचार्यः समर्थः भाषणकारः आसीत् इत्यतः ग्रामीणाः सर्वे सभायां सम्मिलन्ति स्म। एवं प्रतिवर्षम् उत्सवः सफलीभवति स्म।

कृष्णाचार्यस्य पुत्रः हरिदासः। सः अपि सकलशास्त्रपारङ्गतः। पितुः समानतया तत्त्वशास्त्राणि अधीतवान् आसीत्। किन्तु अद्यावधि सभायां वेदिकां न आरूढवान् सः।

एकदा उत्सवसन्दर्भे आरम्भिकदिनद्वयानन्तरं कृष्णाचार्यः अस्वस्थः अभवत्। अतः सः सभां निर्वोढुं स्वपुत्रं हरिदासं प्रेषितवान्।

वेदिकायां कृष्णाचार्यस्य स्थाने हरिदासस्य आगमनं दृष्ट्वा जनाः निराशया एकैकशः उत्थाय गन्तुम् उद्युक्ताः।

तदा हरिदासः सभिकान् उद्दिश्य उक्तवान्- "भो भोः! भक्तजनाः! भवत्सु निवेदनम् अस्ति यत् अद्य मम पिता अस्वस्थः। अतः सः उपन्यासार्थं आगन्तुं न शक्तवान्। अतः कृष्णाचार्यस्य स्मरणार्थं ये आगताः ते सर्वे गन्तुम् अर्हन्ति। ये तु भगवतः स्मरणार्थम् आगताः ते केवलम् अत्र शान्ततया तिष्ठन्तु" इति।

तदा तत् श्रुत्वा जनाः निश्शब्दतया तत्रैव उपविष्टवन्तः।





# गर्वस्य चिकित्सा

पूर्वं सुवर्णपुरे मोहिनीदेवी नाम राजकुमारी आसीत्। सा अपूर्वसुन्दरी। तस्याः सौन्दर्यातिशयः यथा, तथैव गर्वातिशयः अपि। यदा सा प्राप्तवयस्का जाता तदा राजा तस्याः विवाहार्थं बहुधा प्रयत्नं कृतवान्। सर्वदेशानां राजकुमाराणां चित्रपटम् आनीय प्रदर्शितवान्। किन्तु राजकुमारी एकम् अपि न अङ्गीकृतवती। एकैकस्मिन् अपि एकैकं दोषम् उद्भावयति। अतः महाराजः 'एतस्याः विवाहः कथम्' इति समस्यया बहुधा व्यथितः अभवत्।

कदाचित् राजकुमारी उद्याने विहरन्ती आसीत्। तदा अकस्मात् केचन चोराः तत्र आगतवन्तः। पाषण्डः नाम चोरनायकः राजकुमारीं मोहिनीं अनायासेन उन्नीय अश्वस्य उपरि स्थापितवान्। तम् अश्वम् आरुह्य पर्वतप्रान्ते स्थितां काञ्चित् गुहां प्रविष्टवान् च। सा एव गुहा तस्य, तदीयसहचराणां च वासस्थानम् आसीत्। पातकी नाम तस्य पत्नी रोहिणीनाम तस्य पुत्री, तयोः सेवार्थं उभौ वृद्धौ, एका अन्या मध्यवयस्का च अपि तत्र निवसन्ति स्म।

पाषण्डः राजकुमारीम् अश्वतः अवतार्य उक्तवान्- "पश्यतु, एतत् मम वसतिस्थानम्। अत्र मम कुटुम्बं मम सहकारिणः च निवसन्ति। अहम् एतेषां चोराणां नायकः। मम अनुमतिं विना कोऽपि मम सहकारी अन्तः न प्रविशति। अतः भवती अत्र निश्चिन्ततया निवसतु" इति।

"माम् अपहृत्य भवान् किमर्थं वा अत्र आनीतवान्?" इति कोपेन पृष्टवती मोहिनी।

पाषण्डः निरुद्विग्नः सन् उक्तवान्- "मम पत्न्याः अत्र सकलसौकर्याणि सन्ति। तथापि चोरस्य मम निवासः अरण्ये अस्ति इति तस्याः महान् खेदः। एतद्विषये सा मां सर्वदा

निन्दति। 'मां वृथा किमर्थं निन्दति ? किम् आवश्यकम् इति वदतु' इति अहं कदाचित् ताम् उक्तवान्। एतद्देशस्य राजकुमारी मम सेविका भवेत्। तथा कर्तुं भवतः सामर्थ्यम् अस्ति वा ?' इति सा पृष्टवती। अतः अहं भवतीम् अपहृत्य आनीतवान्। एतेन अत्र भवत्या किं करणीयम् इति ज्ञातं स्यात् एव'' इति।



अकस्मात् आपतितया विपत्या चकिता मोहिनी किञ्चित्कालं पाषण्डस्य मुखं तीक्ष्ण-दृष्ट्या दृष्टवती। पाषण्डः सुदृढः उन्नतः च युवकः। शरीरं सुवर्णवर्णम्। सुपुष्टौ हस्तौ पादौ च। सुन्दरं मुखम्। किन्तु तस्य पत्नी पातकी रूपेण साक्षात् विरुद्धा। सा कृष्णवर्णीया वामना च। शरीराकारः अपि विकृतः। तस्याः पुत्री रोहिणी अपि आकृत्या मातरम् एव अनुकरोति।

यदा पाषण्डः मोहिन्या सह वार्तालापे मग्नः आसीत् तदा तत्र आगतः वृद्धः सेवकः- ''अहो ! सौन्दर्यराशिः एव अत्र आगतः अस्ति ! मम नायकः एतां निश्चयेन परि-णेष्यति'' इति उद्गारं प्रकटितवान्।

तदा क्रुद्धः पाषण्डः झटिति तत्समीपं गत्वा कपोले ताडयन्- ''अहम् एकपत्नीव्रतस्थः इति किं भवान् न जानाति ? इतःपरम् एतादृशं वचनं वदति चेत् यमसदनं प्रेषयि-ष्यामि। अत्रत्यस्य कस्यचित् अपि मुखात् एतादृशानि दुर्वचनानि न आगच्छेयुः। जाग-रूकाः तिष्ठन्तु'' इति गर्जितवान्।

अनिच्छन्त्या अपि मोहिन्या तत्रैव स्थातव्यम् आपतितम्। प्रथमं सा सेवां कर्तुं निराकृत-वती। तदा इतरे सेवकाः- 'भवती पाषण्डस्य वचनं तिरस्करोति चेत् सः चित्रहिंसया कठोरं दण्डयिष्यति' इति वदन्तः भीतिम् उत्पादित-वन्तः। अनन्यगत्या मोहिनी पातक्याः सेवायां निरता अभवत्।

एकदा दीपकः नाम तत्रत्यः वृद्धः सेवकः वात्सल्यपूर्णेन स्वरेण सान्त्वयन् ताम् उक्तवान्- ''भवती तु अप्सराः इव सुन्दरी। उन्नते कुले उत्पन्ना च। वस्तुतः भवत्याः जन्म अन्येषां



अन्यः राजकुमारः अस्ति जगति ? विवाहविषयं सद्यःकाले त्यजतु नाम। तस्य मनसः आकर्षणार्थं वा प्रयत्नं करोतु। इतः बहिः गन्तुम् अत्रविष्टः एकः एव उपायः सः'' इति उक्तवान् दीपकः।

असहाया मोहिनी दीपकस्य वचनानुसारं व्यवहर्तुं निश्चितवती। अनन्तरदिने सा तैलाभ्यञ्जनं समाप्य उत्तमानि वस्त्राणि धृतवती। तेन वेषेण तस्याः सौन्दर्यं द्विगुणीभूतम् आसीत्। अनन्तरं पाषण्डस्य पुरतः कार्यव्याजेन इतस्ततः अटितवती। कार्यव्यग्रः पाषण्डः तां विशेषतया न लक्षितवान् एव।

किञ्चित्कालानन्तरं तां दृष्ट्वा पाषण्डः समीपम् आहूय उक्तवान्- ''अद्य भवती सुन्दरतया दृश्यते। किन्तु नीलवर्णानि वस्त्राणि धरति चेत् भवत्याः सौन्दर्यं इतोऽपि वर्धते'' इति।

''तत् भवान् कथं जानाति?'' इति पृष्टवती मोहिनी।

''मम पत्नी उक्तवती। सौन्दर्यप्रज्ञा तस्याः यावत् अस्ति तावत् अन्यस्य कस्यापि नास्ति। अतः तया यत् उच्यते तत् एव प्रमाणभूतम्'' इति उक्तवान् पाषण्डः।

आत्मनः पुरतः कृतां पातक्याः स्तुतिं श्रुत्वा मोहिनी अपमानम् अनुभूतवती इव। कुपिता अपि सा किमपि न उक्तवती।

सेवां प्राप्तुं, न तु कर्तुम्। किन्तु किं वा कर्तुं शक्यते—दैवस्य विचित्रा गतिः! गतस्य विषये शोकेन प्रयोजनं नास्ति। विद्यमानैः साधनैः परिहारोपायः चिन्तनीयः। भवत्याः तु असदृशं सौन्दर्यम् अस्ति। हावभावैः भवती पाषण्डस्य मनः आकर्षयतु, येन सः भवतीं परिणेतुम् उत्सुकः स्यात्। यदि सः भवतीं परिणेष्यति तर्हि सर्वाणि कष्टानि दूरङ्गतानि इव'' इति।

''छी! महाराज्ञी भवितुं योग्या राजकुमारी अहं किं कञ्चित् चोरं परिणयेयम्?'' इति कोपेन पृष्टवती मोहिनी।

''अस्माकं प्रभुः चोरनायकः स्यात् नाम। किन्तु गुणेन सौन्दर्येण औदार्येण च एतत्समः कः



अनन्तरदिने नीलवस्त्राणि धृत्वा इतस्ततः सञ्चरन्ती कृष्णलीलां मन्दस्वरेण गीतवती। तस्याः कण्ठध्वनिः सुमधुरः आसीत्।

पाषण्डः तां दृष्ट्वा– "श्रीकृष्णविषयकं गीतं मास्तु। शिवस्तुतिपरं गीतं गायतु। मम पत्न्याः शिवे विशेष–भक्तिः। तस्याः यत् इष्टं तदेव ममापि इष्टम्" इति उक्तवान्।

एतत् श्रुतवत्याः मोहिन्याः गायनोत्साहः नष्टः। सा म्लानतया स्थितवती।

अन्यदिने सा एकान्ते नाट्याभ्यासे निरता आसीत्। तदा तत्र आगतः पाषण्डः- "एवं सर्वदा नृत्यं न करोतु। मम पत्नी यदा सूचयति तदा एव नाट्यं प्रदर्शयतु। अन्यथा सा कुपिता भवेत्" इति सूचितवान्।

एकदा मोहिनी पाषण्डम् उक्तवती- "भवान् सामान्यः चोरः इव स्थितः चेदपि पराक्रमेण सर्वान् राजकुमारान् अतिशेते इति भवतः सेवकाः सदा वदन्ति। अहं भवतः पराक्रमं द्रष्टुम् इच्छामि" इति।

"एवं तर्हि तदर्थम् अरण्यमध्यं गन्तव्यम्। तथा मया सह आगन्तुं भवत्या मम पत्न्याः अनुमतिः प्राप्तव्या। तदर्थं भवती प्रथमं तां प्रीणयतु" इति उक्तवान् पाषण्डः।

एतादृशः व्यवहारः तया अभ्यस्तः आसीत् एव। अतः सा न कुपिता। सा पत्न्याः समीपं गत्वा विनयेन स्वकीयाम् इच्छां निवेद्य उक्तवती- "आर्ये ! मम सौन्दर्यातिशयेन अहं भवत्याः पतिं वशीकुर्याम् इति भीतिः यदि स्यात् तर्हि तं विषयं त्यजतु नाम। अन्यथा गन्तुम् अनुमतिं ददातु" इति।

पत्नी मन्दहासं प्रकटयन्ती- "भवती आवयोः भावबन्धं न जानाति। भवती तेन सह गत्वा आगच्छतु" इति उक्तवती।

अरण्ये एकत्र कश्चन सर्पः आगतः। सः फणां प्रसार्य दंशनार्थम् आगतः। तदा पाषण्डः तस्य पुच्छं गृहीत्वा परितः परिवृत्य क्षिप्तवान्। धावन्तं हरिणं परितः बाणप्रयोगं कृत्वा तं शरपञ्जरे निश्चलं स्थापितवान्। एतत् सर्वं दृष्ट्वा सा आश्चर्यचकिता अभवत्।

"क्रूरप्राणिनः साधुप्राणिनः च शारीरक-



पीडां विना सजीवं कथं प्रहीतव्याः इति अहं सम्यक् जानामि'' इति साभिमानम् उक्तवान् पाषण्डः।

तदा मोहिनी आश्चर्यं प्रकटयन्ती उक्तवती- ''वस्तुतः भवान् कस्यचित् देशस्य राजा भवितुं योग्यः। भवतः प्रतापः असदृशः एव'' इति।

''भवती मम प्रतापस्य स्तुतिं करोति। किन्तु तेन मम तृप्तिः नास्ति। यतः मम प्रतापस्य स्तुतिं मम पत्नी अद्यावधि न कृतवती। अर्जुनः इव पातालतः गङ्गां भूमिम् आनेतुं भवान् असमर्थः इति माम् उपहसति'' इति पाषण्डः चिन्तया उक्तवान्।

पाषण्डस्य पत्नीविषयकगौरवं दृष्ट्वा आश्चर्यं प्रकटय मोहिनी पृष्टवती- ''अहं भवतः विद्याप्रौढतां दृष्टवान्। भवान् मम विद्याकौशलं न पश्यति वा?'' इति।

''यदा पत्नी मम पार्श्वे भवति तदा भवत्याः विद्याकौशलं पश्यामि'' इति उक्तवान् पाषण्डः।

तदा मोहिनी उत्पन्नं कोपम् आत्मनि निगृह्य शान्तस्वरेण एव उक्तवती- ''अहम् एकं विषयं निवेदयितुम् इच्छामि। अहं सौन्दर्यवती इति विषयं न केवलम् अहं, सर्वे राजकुमाराः जानन्ति। विवाहेच्छया आगतान् तान् सर्वान् निराकृतवती अहम्। तादृशीं मां भवान् तिरस्कारदृष्ट्या पश्यति किल? भवतः पत्न्याः निन्दनं करोमि इति मा चिन्तयतु। वस्तुतत्त्वं तु एतत् यत् पातकी महाक्रूररूपिणी। तादृश्या आकृष्टः भवान् सौन्दर्यवत्यां मयि औदासीन्यं प्रकटयति किल? किम् एतत् आश्चर्यम्?'' इति।

तदा पाषण्डः तां परीक्षादृष्ट्या दृष्ट्वा मन्दहासपूर्वकम् उक्तवान्- ''मम दृष्ट्या बाह्यसौन्दर्यापेक्षया अन्तःसौन्दर्यम् एव श्रेष्ठम्। अतः एव अहं पातक्यां तावत् अनुरक्तः। तावन्तम् आदरं प्रदर्शयामि च'' इति।

गुहां प्रति आगमनानन्तरं मोहिनी दीपकाय अरण्ये प्रवृत्तं सर्वं निवेद्य- ''इतःपरम् इतः बहिः गन्तुं कोऽपि मार्गः नास्ति एव

मम'' इति सविषादम् उक्तवती ।

''तथा किमर्थं चिन्तयति ? केनापि उपायेन यजमानपत्नीं प्रीणयतु । यदि सा इच्छति तर्हि भवत्याः विमोचनं क्षणमात्रस्य कार्यम्'' इति सूचितवान् दीपकः । तदर्थं आश्रयणीयं मार्गम् अपि सः सूचितवान् ।

अपरस्मिन् दिने वृद्धः दीपकः पातक्याः सञ्चारमार्गे कदलीफलस्य त्वचं पातितवान् । किञ्चित्कालानन्तरं पातकी तेन मार्गेण गच्छन्ती पतिता । यावत् तस्याः पतनं न समाप्तं ततः पूर्वम् एव आगत्य मोहिनी तां रक्षितवती ।

तदा पातकी सन्तोषेण उक्तवती- ''भवती राजकुमारी चेदपि सेवकान् अपि अतिरिच्य श्रद्धया सेवां करोति । एतेन अहं तुष्टा अस्मि । वस्तुतः भवती यदर्थम् आनीता तस्य कारणम् अन्यदेव अस्ति । अहम् एतस्मात् गुहाजीवनतः खिन्ना अस्मि । नगरे कुत्रापि स्वामिना सह सगौरवं जीवितुम् इच्छामि । भवती तु राजकुमारी किल ! अतः 'तदर्थं व्यवस्थां करोमि' इति आश्वासनं ददाति चेत् भवतीं स्वतन्त्रां करिष्यामि'' इति ।

राजधानीं पुनः प्राप्तुम् एषः एव उचितः सन्दर्भः इति चिन्तयित्वा मोहिनी पातक्याः प्रस्तावं ससन्तोषम् अङ्गीकृतवती ।

अनन्तरं पातकी पतिं ''एतां राजधानीं प्रापयतु'' इति उक्तवती । पाषण्डः मोहिनीम्



अश्वस्य उपरि आरोप्य राजधानीं गतवान् । 'पाषण्डः राजकुमार्याः अपहारकः' इति जानन्तः अपि सेवकाः पाषण्डस्य उपरि हस्तं न प्रसारितवन्तः । यतः मोहिनी तथा आज्ञां कृतवती आसीत् ।

पाषण्डः राजकुमारीं महाराजस्य पुरतः अवतार्य उक्तवान्- ''महाराज ! पश्यतु भवतः पुत्रीम् । केनापि उद्देशेन भवतः पुत्री मया नीता आसीत् । 'सः उद्देशः कः' इत्यादीनां विषये भवान् ताम् एव पृच्छतु'' इति ।

तदा मोहिनी उद्वेगेन उक्तवती- ''तात ! केनापि उपायेन एषः अत्रैव यथा तिष्ठेत् तथा करोतु । एतस्मै मा दत्त्वा विवाहं कारयतु च । येन उद्देशेन सः मा नीतवान् तत् इदानीं

गौणम्" इति।

एतत् वचनं श्रुत्वा पाषण्डः ततः पलायनं कर्तुं प्रवृत्तः। तदा भटाः तम् आक्रम्य तस्य पलायनं निवारितवन्तः।

"हन्त! एतावत्कालानन्तरं वा भवती विवाहम् अङ्गीकृतवती किल? देवो दयालुः" इति उद्गारं प्रकटय महाराजः मोहिनीं पाषण्डाय दत्त्वा विवाहं निर्वर्तितवान् एव।

विवाहानन्तरं मोहिनी- "मां क्षाम्यतु। भवान् चोरनायकः। तत्रापि पूर्वम् एव विवाहितः। तथापि अहं भवन्तम् अनुरोध-पूर्वकं परिणीतवती। भवान् मम पतिः इत्येतावता अहं तृप्ता। यदि भवान् अत्र स्थातुं न इच्छति तर्हि एतत्क्षणे एव इतः गन्तुम् अर्हति। किन्तु तथा गच्छति चेदपि अचिरात् एव प्रत्यागमिष्यति इति मम दृढः विश्वासः" इति उक्त्वा पाषण्डस्य पादयोः नमस्कारं कृतवती।

पाषण्डः प्रीत्या ताम् उत्थापयन्- "यदि अहं इतः गमिष्यामि तर्हि भवत्या सह एव। एतावत्पर्यन्तं भवती यत् दृष्टवती तत्सर्वं नाटकाङ्गभूतम्। गुहायां ये सन्ति ते सर्वे भवत्याः पित्रा प्रेषिता एव। मम नाम शूरसेनः। अहं प्रतापनगरस्य राजकुमारः। भवत्याः सौन्दर्यातिशयेन आकृष्टेषु अहम् अपि अन्यतमः। अहं भवत्याः गर्वातिशयम् अपि श्रुतवान्। 'गर्वस्य औदासीन्यम् एव औषधम्' इति चिन्तयन् भवतीं गुहां नीत्वा पदे पदे भवत्या विषये औदासीन्यं प्रकटितवान्। इदानीं वदतु- भवती मया सह मम राज्यम् आगच्छति वा?" इति।

"'सौन्दर्यस्य विभूषणं सुजनता' इति कविना यत् उक्तं तत् सत्यम् इति गुहायाम् अहं ज्ञातवती। इतःपरं अहं भवता सह एव निवसन्ती भवतः सेवां कुर्वती च आत्मनः उन्नतिं साधयिष्यामि। भवान् मम पतिः गुरुः च" इति उक्तवती मोहिनी। अनन्तरं तौ चिरकालं सुखेन जीवितवन्तौ।





# पिशाचपर्वतः

पूर्वं पश्चिमघट्टप्रान्ते 'पिशाचपर्वतः' नाम कश्चन पर्वतः आसीत्। तं पर्वतं परितः ये निवसन्ति ते स्वकीयाः धेनवः पर्वतस्य उपरि यथा न गच्छेयुः तथा जागरूकतया पालयन्ति स्म। धेनुः पर्वतस्य उपरि गच्छति चेत् तस्याः प्रत्यानयनार्थं गन्तुं कस्यापि धैर्यं नास्ति। यतः अद्यावधि पर्वतं ये आरूढवन्तः तेषु कोऽपि न प्रत्यागतः। एतं विषयं सर्वे जानन्ति। अतः यदि धेनुः उपरि गच्छति तर्हि तस्याः प्राप्तेः आशां त्यजन्ति स्म ते।

किन्तु पर्वतस्य उपरि अपि कश्चन धेनुसमूहः दृश्यते स्म। प्रातःकाले ताः धेनवः गोष्ठतः बहिः आगच्छन्ति। शिखरभागे एव तृणानि चरन्ति। सायङ्काले च केनापि प्रेर्यमाणाः इव गोष्ठं प्रतिगच्छन्ति। सर्वैः धेनवः दृष्टाः। किन्तु केनापि गोपालकः न दृष्टः। अतः ताः धेनूः कः पोषयति, कः वा दोहनं करोति, दुग्धं क्षीरं केन किं क्रियते इत्यादिकं किमपि न ज्ञायते स्म जनैः।

पर्वतस्य उपरि गोष्ठस्य पार्श्वे कुटीरः कश्चन दृश्यते स्म। सः गोपालकस्य वसतिस्थानं स्यात् इति जनानां तर्कः। प्रतिदिनं रात्रौ तत्कुटीरतः धूमः उद्गच्छति। अतः तत्र कश्चन निवसति इति तु सत्यम् एव। किन्तु सः कः? किं सः मानवः, उत, पिशाचः? अथवा देवमानवः? केचन वदन्ति- "तत्रत्यः देवमानवः एव। सः अदृश्यरूपेण तिष्ठन् सर्वाणि कार्याणि करोति" इति।

इतरे केचन अन्यथा वदन्ति स्म- "तत्र विद्यमानः न देवमानवः, अपि तु पिशाचः एव। पिशाचस्य दुष्टः स्वभावः सुप्रसिद्धः। सः एव पिशाचः धेनूः अपहरति। धेनूः अन्विष्य आगतान् मारयति च" इति।

एवं पिशाचभयेन कोऽपि पर्वतस्य उपरि

"पञ्चविंशतिवर्षेभ्यःपूर्वं चन्दमामायां प्रकाशिता कथा"



गन्तुं न उत्सहते। यदि कश्चित् गन्तुम् उद्युक्तः भवति तर्हि- "किं भोः, बुद्धिः नास्ति वा भवतः? रात्रौ दृष्टे कूपे दिने कोऽपि पतति वा?" इति वदन्तः तस्य गमनं निवारयन्ति स्म।

एवं स्थिते कदाचित् सत्यपालः नाम नूतनः गोपालकः तत्प्रान्तम् आगतवान्। सः पिशाचपर्वतविषये सर्वं श्रुतवान्। कानिचन दिनानि यावत् तस्य पर्वतस्य परिशीलनम् अपि कृतवान्। एतदनन्तरं तस्य मनसि तीव्रा भावना उत्पन्ना यत् पर्वते वस्तुतः किं प्रचलति इति द्रष्टव्यम् एव इति। एतद्विषये कुतूहलः दिने दिने प्रवृद्धः।

इतरे गोपालकाः 'साहसं मा करोतु' इति विवेकं बोधितवन्तः। किन्तु सत्यपालः तत् किमपि न स्वीकृतवान्। अन्ते स्नेहिताः जागरूकतावचनानि उक्तवन्तः- "भवान् पर्वतस्य उपरि गच्छति चेदपि कुटीरस्य अन्तः न गच्छतु। यतः तस्य अन्तः गतः कोऽपि न आगतः। यदि दुराग्रहेण गच्छति तर्हि भवतः मरणम् अपि निश्चितम् एव" इति।

किन्तु सत्यपालः सङ्कल्पविषये दृढः। एकदा सः पर्वतम् आरुह्य कुटीरं प्राप्तवान्। तत्र परिसरः इतरत्र यथा तथैव शान्तः अस्ति। बीभत्सजनकं भयानकं वा दृश्यं कुत्रापि न दृष्टम्। सः कुटीरस्य द्वारप्रदेशं प्राप्य अन्तः दृष्टिं प्रसारितवान्। कुटीरस्य अन्तर्भागः मनुष्यवासयोग्यः इव दृष्टः। "कः तत्र अन्तः?" इति द्वित्रवारम् उच्चैः पृष्टवान् सत्यपालः। किन्तु किमपि प्रत्युत्तरं न आगतम्।

सत्यपालः धैर्येण अन्तः गतवान्। तत्र एकत्र पात्रेषु भोजनपदार्थाः सिद्धाः आसन्। अपरत्र मञ्चः तेन दृष्टः। मञ्चे शय्या अपि आस्तीर्णा अस्ति। उपधानादिकं यथास्थानं स्थापितम् अस्ति।

"अत्र कोऽपि मानवः निवसति इति तु सिद्धम्। प्रायः सः बहिः गतः स्यात्। तस्य प्रत्यागमनपर्यन्तम् अहं विश्रान्तिम् अनुभवामि" इति चिन्तयित्वा सत्यपालः मञ्चम् आरुह्य

हस्तपादौ प्रसार्य शयनं कृतवान् ।

अत्रान्तरे बहिः पादध्वनिः श्रुतः । कश्चन राक्षसाकारकः पुरुषः अन्तः आगत्य साक्षात् भोजनपात्रसमीपं गत्वा उच्चैः पृष्टवान्- "मञ्चे यः शयनं कृतवान् तस्य निमित्तम् अपि पाकः सिद्धः अस्ति वा ?" इति। 'आम्' इति ध्वनिः कुतश्चित् श्रुतः । अनन्तरं सः विशालकायः मञ्चस्य समीपम् आगत्य- "अये ! उत्तिष्ठतु। भोजनार्थम् आगच्छतु" इति उक्तवान् ।

अन्ये चेत् तं राक्षसाकारकं दृष्ट्वा मृतप्रायाः भवेयुः । किन्तु सत्यपालः न भीतः । सः शान्तस्वरेण उक्तवान्- "येन श्रमः कृतः सः एव भोजनं कर्तुम् अर्हति। मया तु कोऽपि श्रमः न अनुष्ठितः। अहं कथं भोजनं कुर्याम् ?" इति ।

पिशाचः उत्तररूपेण किमपि न अवदत् । भोजनपात्राणां समीपे उपविश्य क्षणमात्रेण सर्वाणि खाद्यानि भक्षितवान् । उदभाण्डपरिमितं क्षीरम् अपि निरायासं पीतवान् ।

अनन्तरं सः पिशाचः भित्तिपार्श्वे स्थितं कुद्दालं खनित्रं च स्वीकृत्य- "अये ! एतानि स्वीकृत्य मया सह अन्तरङ्गम् आगच्छतु" इति आदिष्टवान् ।

"अन्तरङ्गतः अहं किमपि उपरि आनेतुं न शक्नोमि । अतः एतानि खनित्रादीनि



स्वीकृत्य आगमनस्य आवश्यकता अपि नास्ति" इति उक्तवान् सत्यपालः ।

तदा पिशाचः तानि साधनानि स्वयं स्वीकृत्य- "आगच्छतु मया सह" इति उक्तवान् ।

"अस्तु, भवान् अग्रे गच्छतु । अहं भवन्तम् अनुसरामि" इति उक्तवान् सत्यपालः । उभौ अपि अन्तरङ्गं प्रविष्टवन्तौ । "अत्र खनतु" इति आदिष्टवान् पिशाचः ।

"मया अत्र किमपि न स्थापितम् येन अहं खननं कुर्याम्" इति उक्तवान् सत्यपलः । पिशाचः स्वयं खननं कृतवान् । अन्तः बृहत् भाण्डम् आसीत् । "एतत् उन्नयतु" इति सूचितवान् पिशाचः ।

"येन अन्तः स्थापितं तेनैव किल उन्नेतव्यम् ? मया तु अन्तः न स्थापितम्" इति तूष्णीं स्थितवान् सत्यपालः। पिशाचः एव भाण्डम् उन्नीय तदीयम् आवरणम् अपसारितवान्। भाण्डस्य अन्तः प्रकाशमानानि सुवर्णनाणकानि आसन्। पिशाचः तानि भूमौ संस्थाप्य सत्यपालम् उक्तवान्- "आवरणेन पात्रस्य पिधानं करोतु" इति।

"येन उद्घाटितं तेनैव पिधानम् अपि करणीयम्, न तु मया" इति उक्तवान् सत्यपालः। पिशाचः एव पिधानं कृतवान्।

भाण्डे यानि सुवर्णनाणकानि आसन् तानि त्रिधा विभज्य पिशाचः उक्तवान् "भोः! अत्र राशित्रयम् अस्ति। एकः राशिः मम। अपरः भवतः। अन्यः जनोपकारार्थम्। मया भवदर्थम् इति यः राशिः स्थापितः स एव भवता स्प्रष्टव्यः। तथा भवान् स्पृशति चेत् मम शापविमोचनं भवति। भवतः अपि हितं सिध्यति। यदि भवान् अन्यार्थं स्थापितं राशिं स्पृशति तर्हि भस्मसात्भविष्यति। यावत् मम शापविमोचनार्थम् अन्यः न प्राप्यते तावत् भवतः एषः एव गतिः" इति।

सत्यपालः धैर्येण एकं राशिं स्पृष्टवान्। तदा कुटीरे महान् प्रकाशः उत्पन्नः। पिशाचः अदृश्यः अभवत्। तत्स्थाने कश्चन गन्धर्वः स्थितः दृष्टः। सः गन्धर्वः सत्यपालं- "भवतः सम्पर्केण मम शापविमोचनम् अभवत्। अहं मम लोकं गमिष्यामि। एषः पर्वतः, अत्रत्याः धेनवः, धनराशिः च इतःपरं भवदीयः एव" इति उक्त्वा अदृश्यतां गतः।

पिशाचपर्वततः सजीवम् आगतं सत्यपालं दृष्ट्वा जनाः सर्वे आश्चर्यचकिताः। सत्यपालः पर्वतस्य उपरि प्रवृत्तं सर्वं तेभ्यः निवेदितवान्।

तद्दिनतः आरभ्य सत्यपालः पिशाचपर्वते वसतिम् आरब्धवान्। सुवर्णराशौ आत्मनः भागं पृथक् संस्थाप्य, जनेभ्यः अवशिष्टस्य वितरणं कृतवान्। कालान्तरे सत्यपालाद्रिः इति तस्य पर्वतस्य नाम प्रसिद्धम् अभवत्।



पक्षिणः पशवः च –

# उड्डयनसमर्थाः चिक्रोडाः

परिस्थितेः अनुगुणं ये आत्मानं परिवर्तयितुं शक्नुवन्ति तादृशानां प्राणिनां सन्ततिः एव चिरकालं जीविष्यति। अन्यथा कालान्तरे तेषां सन्ततिः नश्यति। परिसरानुगुणं परिवर्तनशीलता पक्षिणां पशूनां च सहजः स्वभावः इत्यत्र उड्डयनसमर्थाः चिक्रोडाः एव प्रमाणम्। युरोपखण्डे, अमेरिकाखण्डे, उत्तर-अमेरिकायां च तत्र तत्र दृश्यमानानाम् एतेषां चिक्रोडानां ३२ प्रकाराः सन्ति।

एते चिक्रोडाः उन्नतासु वृक्षशाखासु निवसन्ति। आहारार्थम् आक्रमणं कुर्वद्भ्यः पक्षिभ्यः आत्मानं रक्षितुम्, अधः पतितानि बीजानि फलानि उन्नेतुं च एते पक्षाकारकान् पादान् प्रसार्य उड्डयनं कुर्वन्ति। अग्रिमपादयोः, पृष्ठतः स्थितयोः पादयोः च मध्ये रोमपूर्णं चर्मपटलम् अस्ति। तच्च पटलं उड्डयनसमये पक्षः इव आचरति।

एते चिक्रोडाः उड्डयनतः पूर्वं शिरः उन्नीय इतस्ततः दृष्ट्वा गन्तव्यं स्थानं कियद्दूरे स्यात् इति सम्यक् परिशील्य अग्रे गच्छन्ति। भूमिप्राप्तितः पूर्वं पुच्छम् उन्नयन्ति। पादयोः मध्ये चर्मपटलम् अस्तीत्यतः इतरचिक्रोडानाम् अपेक्षया अधिकं निरातङ्कं जीवन्ति। एतेषाम् उड्डयनम् अपि निरातङ्कम् एव। प्रतिघण्टं ६.५ कि.मी. वेगेन गच्छन्ति।



एते दिने वृक्षशाखासु निलीय तिष्ठन्ति। रात्रौ आहारान्वेषणार्थं निर्गच्छन्ति। यस्मिन् वृक्षे एतेषां वासः तस्यैव वृक्षस्य वर्णः एतेषां चर्मणः अपि।

फिलिप्पैन्देशे मलेषियादेशे च एतज्जातीयं प्रकारद्वयं परिदृश्यते। तेषां चिक्रोडानां आकारः मार्जारस्य इव। तीक्ष्णाः नखाः, अल्पाकारकाः चेदपि दृढाः दन्ताः च एतेषां वैशिष्ट्यम्।

आस्ट्रेलियादेशे निवसन्तः एतत्-प्रकारकाः चिक्रोडाः काङ्गरूप्राणी इव स्वपुत्रं उदरस्यूते स्थापयित्वा सञ्चरन्ति।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः।

| | |
|---|---|
| अचिरात् - | Shortly |
| अन्तरङ्गः - | Basement |
| अप्रतिमः - | Incomparable |
| अस्थि - | Bone |
| आस्तीर्णा - | One which has been spread |
| उद्भाण्डम् - | A large vessel |
| उद्गच्छति - | Spring up |
| उपधानम् - | Pillow |
| कण्डोलः - | Basket |
| कनिष्ठिका - | Little finger |
| करतलम् - | Palm |
| कर्कटकः - | Crab |
| कुद्दालः - | Pick axe |
| केशप्रसाधनम् - | Combing the hair |
| कोणम् - | Corner |
| कोषः - | Sheath |
| खनित्रम् - | Crowbar |
| खलीनः - | Bridle |
| खुरपुटध्वनिः - | Sound of hoofs |
| चरति - | Grazes |
| जल्पति - | Gossips |
| ताडपत्राणि - | Palm leaf |
| तोरणः - | Festoons |
| त्वक् - | Plantain skin |
| दिगन्तः - | Horizon |
| दुग्धम् - | Milked |
| धीवरः - | Fisherman |
| पलितः - | Greyed |
| पिष्टम् - | Flour |
| प्रपातः - | Valley |
| प्रीणयतु - | To delight |
| फणा - | Hood |
| बडिशम् - | Bait |
| भित्तिः - | Wall |
| मन्थानः - | Churming rod |
| मत्स्याधानी - | Fish basket |
| मयूरपिञ्छः - | Peacock feather |
| मर्कटः - | Monkey |
| योधः - | Soldier |
| वाटिका - | Garden |
| शोफता - | Swelling |
| श्यालः - | Brother-in-law |
| सङ्गच्छते - | Suits |
| समाधिः - | Lost in contemplation |
| साकारता - | Embodiment |
| स्वप्नालापः - | Muttering in sleep |

* * *

# चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां एप्रिल्-८६ मासे प्रकटयिष्यामः।





उपरितनं चित्रद्वयं पश्यन्तु। युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा फेब्रवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ※ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ※ अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

७३/२, 'अक्षरम्' रङ्गराव्मार्गः, शङ्करपुरम् बेङ्गलूरु–५६०००४

---

**'डिसेम्बर' मासस्य चित्रशीर्षिकास्पर्धाया परिणामः–**

**प्रथमचित्रम्– किं दृष्टिरियं चारुतान्वेषिका?**

**द्वितीयचित्रम्– किं सृष्टिरियं चारुतावबोधिका?**

**प्रेषकः– नवीन्, द्वारा/ पै स्टोर्स्, मैन् बसस्टयाण्ड्, सागर-५७६४०१ - कर्णाटकम्**

## भवन्तः जानन्ति वा? (उत्तराणि)

१. जपान्देशे कममाराप्रदेशे। २. श्रीलङ्कायां कण्डीनगरे ३. गेलिलियो। ४. दासवाणिज्यस्य निषेधार्थं। ५. फिलिप्पैन्।

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# पाकः समाप्तः वा ?

| | |
|---|---|
| सरोजा - पाकः समाप्तः वा ? | Finished cooking? |
| पार्वती - समाप्तप्रायः । व्याघरणमात्रम् अवशिष्टम् । भवत्याः पाकः समाप्तः वा ? | Almost. Flavouring is all that remains. How about you? |
| स- मम पतिः दशवादने कार्यालयं गच्छति । अतः प्रातः एव भोजनम् । तेन च नववादनतः पूर्वम् एव पाकः सिध्यति । | My husband leaves for his office at 10. So we have lunch in the morning and it will be ready by 9. |
| पा अद्य पाके कः विशेषः ? | What is today's Menu? |
| स विशेषः कः ? क्वथितं सारं च कृतवती । आलुकस्य व्यञ्जनम् अपि आसीत् । भवती किं सज्जीकुर्वती अस्ति ? | Nothing special. I have prepared Sambar and Rasam. Potato Curry is also there. What are your preparations? |
| पा- मया अपि केवलं सारः सज्जीकृतः । यतः अद्य शाकः न आनीतः । | I' have prepared just Rasam, because we did not buy any vegetable today. |
| स- मया ह्यः नूतनः उपदंशः सज्जीकृतः । पुत्रं मया सह प्रेषयतु । तद्द्वारा किञ्चित् उपदंशं प्रेषयामि । | I have made some pickles only yesterday. Let your son come along. I shall send you a little with him. |
| पा- वृथा भवत्याः क्लेशः....। | Why bother unnecessarily? |
| स- अत्र कः क्लेशः ? पुत्रं मया सह प्रेषयतु तावत् । | Oh, It's nothing big. Just send your son. |
| पा- गतमासे सज्जीकृतः उपदंशः इतोऽपि पर्याप्तमात्रेण अस्ति अत्र....। | I still have plenty of them made last month. |
| स- चिन्ता नास्ति । नूतनां रुचिं पश्यतु । किं सर्वदा दीयते वा मया ? | Don't you worry. Have a change. Do I offer it every day? |
| पा- अथ किम् ? भवती एवं वदन्ती एव सवदा किमपि ददाति एव । | What else? You say that, but always give something. |